परिनिर्वाणकाले[4]पुनर्विशुद्धानां योगिनां परिवृत्ताश्रयाणां[1] सर्वेक्लिष्टधर्मनिर्बीज[2] आश्रयः परिवर्तते। सर्वेकुशला[3]व्याकृतधर्मबीजेषु च प्रत्ययान्[4] विकलीकरोति। अध्यात्मप्रत्ययदर्शितां[5] [5] च प्रतिलभते ॥

[गर्भावस्था]

स पुनर्गर्भो[6]ऽष्टत्रिंशता सप्ताहैः सर्वाङ्गप्रत्यङ्गोपेतो भवति[7]। ततः परं चतुरहेण जायते। यथोक्तं भगवता ग र्भा व [6] क्रा न्ति सू त्रे ।[8]

स पुनः सम्पूर्णो[9]भवति नवभिर्मासै परेण[10] वा पुनरिति।

अष्टभिः पुनर्मासैः सम्पूर्णो नोत्तमसम्पूर्णः। षड्भिः सप्तभिर्वा मासैरसम्पूर्ण एव विकलो वा।[11]

[7] तस्यां पुनः षडायतनावस्थायां मातुरभ्यन्तरजातौदरिको[12] रसो [13]येनास्य पुष्टिर्भवति। कललाद्यासु पुनः सूक्ष्मतरास्ववस्थासु सूक्ष्मेण रसेन पुष्टि-[Tib 15b 1]र्वेदितव्या ॥

1 Tib. gnas gyur pa. rnams. kyi
2 Tib. simply *-bija* (sa.bon).
3 Tib. dag pa, *śuddha* for *kuśala*, Tib. dge ba.
4 Tib. omits it
5 For *-darśitām* Tib reads *-vaśitām* (dban.ba).
6 Tib. lit. *garbhasthaḥ* (mnal. na. gnas. pa.) See below.
7 After this MS. has *garbhaḥ* and Tib *garbhe* (mnal. du). The reading suggested by Tib. is quite clear *sa punar garbhastho 'sta° bhavati garbhe,* but *garbhaḥ* at the end of MS. can hardly be construed.

8 *Garbhāvakrānti Sūtra* is often quoted in Mahāyāna works. It deals with constitutive elements of human beings Nanjio 1121, *Ratnakūta*, Chap. 14, Nanjio 23,12 In the *Majjhima Nikāya* it is called *Dhātuvibhanga Sutta* (iii. 231) It constitutes one of the sources of the *Pitāputrasamāgama Sūtra* of which there are extracts in the *Śikṣāsamuccaya*, p. 244, *Bodhicaryāvatāra-pañjikā*, IX 88, *Madhyamakāvatāra*, p. 269 See *Kośa*, i. 49.

9 For *sampūrṇaḥ* not clear in MS Tib lit. suggests *atisampūrṇaḥ* (śin. tu rjogs pai), 10 Tib lit *tadatyaye* (de. las hdas na)
11 Tib adds *iti* (źes).
12 Tib. translates it in an explanatory way
13 Tib *tena* (des)

८ ख, Tib. 15b. 1

स च गर्भोऽष्टावस्थः। अष्टावस्थाः[1] कतमाः। कललावस्था अर्बुदावस्था पेश्यवस्था घनावस्था प्रशाखावस्था [2] केशरोमनखावस्था इन्द्रियावस्था व्यञ्जनावस्था च।[2]

तत्र शरोप[९ क]निवद्धमन्तर्द्रवं कललं। सान्तर्बहिः शरीभूतं दधीयमान[3] मप्राप्तं च मांसावस्थमर्बुदं। मांसीभूतं शिथिलं च पेशी। घनीभूतमामर्शक्षमं घनः[3]। तत एव चाधिमांसयोगेनाङ्गप्रत्यङ्गनिमित्त[4]प्रादुर्भावः प्रशाखा। ततः केशरोमनखप्रादुर्भावस्तदवस्थैव। ततश्चक्षुरादीनामिन्द्रियाणामभिनिर्वृत्तिरिन्द्रियावस्था। ततस्तदधिष्ठानाभिव्यक्ति[5]र्व्यञ्जनावस्था[4]॥

ततः पूर्वकर्मवशान्मात्रा च विषमापरिहणा[5]द्विषमापरिहारजैश्च गर्भे तदनुकूलैर्वायुभिः केशवैकृत्यं वर्णवैकृत्यं त्वग्[6]वैकृत्यमङ्गवैकृत्यं च जायते॥

कथं केशवैकृत्यं[6]जायते। पूर्वं तावदनेन तत्संवर्णनीयं[7] पापकमकुशलं कर्म कृतं भवति। माता वास्य क्षारलवणरसप्रायमन्नपानं बाहुल्येन निषेवते येन[8] [7] मन्द[9]केशरोमता[10]गर्भस्य भवति॥

कथं वर्णवैकृत्यं भवति। कर्म पूर्ववद्धेतुः। प्रत्युत्पन्नः प्रत्ययो मातात्युष्णातपादिनिषेविणी[11] भवति। तेनास्य कृष्णश्याम[12][Tib 16a 1]वर्णता जायते। अतिशीतलगर्भगृहनिवेशिनी वा भवति। तेनास्य शुक्लवर्णता भवति। अत्युष्णाभ्यवहारिणी वा पुनर्भवति। येनास्य लोहितवर्णता जायते॥

1 Tib omits *avasthāḥ*.

2 Here and below Tib *kālaḥ* (dus) for *avasthā*.

3 MS *ghanam*

4 The last four are not in *Mahāvyutpatti*, § 190. 1

5 MS *-pariharaṇā*. Tib which reads here as follows is not quite clear snon. gyi. las. kyi dban dan mas. yan ba. ma. spans. pa. danl yan pa ma. spans. las. byun. bahi.

6 MS. *ca*, but not in Tib.

7 ? *tatsamvartanīyam* ? Tib suggests *tādṛśam* (de Ita bur. hgyur. bahi)

8 Tib. *tena* (des na). See below where there is *tena* for *yena*

9 Tib. nan. MS *nanda*

10 Tib adds *tasya* (dehi).

11 MS *nisevanī*.

12 MS *syama* for *śyāma*, Tib. sno. bsans. su. does not give any appropriate sense

९ क, Tib. 16a. 1

कथं त्वग्वैकृत्यं भवति। कर्म [2] पूववत्तद्धेतुः[1]। वर्तमानः प्रत्ययो माता-त्यर्थं मैथुनधर्मनिषेविणी भवति। येनास्य दद्रुलता वा कच्छुलता वा कुष्ठलता वा त्वग्दोषा जायन्ते ॥

कथमङ्गवैकृत्यं भवति। कर्म [3] पूर्ववत्तद्धेतुः। वर्तमानः प्रत्ययो माता धावनप्लवनलङ्घनादीनीर्यापथानध्यापद्यते[2] येनास्य विषमापरिहारादङ्गवैकृत्यं जायते इन्द्रियवैकल्यं वा भवेत् ॥

[सचेत्][3] पुनस्त्री[4] भवति [4] स पृष्ठवंशं निश्रित्योरः[5] संपुरस्कृत्य वामे पार्श्वे मातुरवतिष्ठते। सचेत्पुमान् भवति स उरो निश्रित्य पृष्ठवंशं संपुरस्कृत्य दक्षिणे पार्श्वे मातुरवतिष्ठते ॥

[5]सम्पूर्णे च पुनस्तस्मिन्गर्भे मातुरधिमात्रं गर्भमसहमानाया अध्यात्मभवा वाताः[6] प्रादुर्भवन्ति येऽस्य रुजं जनयन्ति। तस्य च कर्मविपाकजा [6] उपपत्त्यंशिका वायवो जायन्ते। ते[7] गर्भमूर्ध्वपादमवशिरस्कं कुर्वन्ति। ततः स गर्भः कोशपरिवेष्टित[8] एव[9] निष्क्रामति। [९ख] निष्क्रामतः पुनः स कोशः [7] कुक्षौ भवति। योनिद्वारनिर्गमसमकालं च पुनर्जातावस्थेत्युच्यते। स जातः क्रमेणौपपत्त्यंशिकं च स्पर्शं स्पृशति। तद्यथा। चक्षुःसंस्पर्शं प्रज्ञप्तिं चानुपतति[10] यदुत लोक[ Tib. 16b. 1 ]यात्रा[11]व्यवहारानुशिक्षमाणतया।

1 In Tib. *tad* is omitted.

2 Tib. drag po byed which lit. means *uddāmam karoti* i e. 'makes violently'.

3 Tib gal te

4 Tib. mo , MS. *strī.*

5 MS. *nihśritya*

6 Tib nan. du. ılun. dag , MS *adhyātmibhāvā yatah(?)*

7 MS *sa*, and adds here *evam* for which Tib has *tam* (de)

8 For *parivestitah* Tib yog. bžin du which is not clear to me

9 Not in Tib

10 For *caksuh° patati* Tib. mig. gi hdus te. reg. pahi bar. du. reg par. hgyur 10. For *prajñaptim cānupatati* there is nothing in Tib.

11 Tib hgig. rten. spyod. But for *lokayātrā Mahāvyutputti* reads hjig. rten. gyi tshul. lam. spyod. pa MS *lohapātrā*, evidently for *lokayātrā*,

९ ख, Tib. 16a. 1

कुलं वाध्यावसति ।[1] यदुत वृद्धेरन्वयादिन्द्रियाणां[2] परिपाकात् । कर्माणि च करोति यदुत लौकिकानि शिल्पकर्मस्थानानि । [2] विषयांश्चोपभुङ्क्ते यदुत रूपादीनिष्टानिष्टान् । स दुःखं च प्रतिसंवेदयते यदुत पूर्वकर्मप्रत्ययं वा वर्तमानप्रत्ययं वा । [3] यथा प्रत्ययहार्यश्च भवति यदुत पञ्चगतिगमनप्रत्ययैर्वा निर्वाणगमनप्रत्ययैर्वा ॥

येषां च सत्त्वानां यस्मिन्सत्त्वनिकाय आत्मभावस्य प्रादुर्भावो भवति तत्र या सत्त्वसभागता सा तेषां सत्त्वानां चतुर्भिः प्रत्ययैः प्रत्ययकार्यं करोति । बीजधर्मोपसंहारेणा[4]हारोपचयेन रक्षाविधानेन कायवाक्कर्माभिसंस्कारानुशिक्षणतया च । तद्यथा । मातापितरौ तत्प्रथमतः शुक्रशोणितमुपसंहरतः । [5] ततो जातं विदित्वा तदुपमेनाहारेण स्तन्येन चापाययन्ति पोषयन्ति संवर्धयन्ति । ततस्तत्र [तत्र][3]ानुविचरन्तमकालचर्याया[4] विषमचर्याया आरक्षाविधानं कुर्वन्ति ।[5] ततः [6] संलापव्यवहारमनुशिक्षयन्ति वृद्धेरन्वयादिन्द्रियाणां परिपाकात् । तेऽप्यन्येषाम् [अनुशिक्षयन्ति][6] । एवममी सत्त्वा[7] अनादिकालं सुखदुःखे प्रत्यनुभवन्ति । [7] नो तु सुखदुःखव्यतिक्रममवाप्नुवन्ति यावन्न बुद्धानां बोधिमागम्य परतो घोषान्वयादध्यात्मं[8] च योनिशो मनसि कारादास्रवक्षयमनुप्राप्नुवन्ति । तदिदं सुदुर्बुधं पदं यदुत [Tib 17a 1]

न मे क्वचन कश्चन किञ्चनास्ति ।[9] नाप्यह क्वचन कस्यचित्किञ्चिदिति ।

एवं तावदाध्यात्मिकानां भावानां च्युत्युपपादो भवति ॥

[ संवर्तविवर्तौ ]

[२] कथं पुनर्बाह्यानां भावानां संवर्तविवर्तौ भवति । संवर्तविवर्तसंवर्तनीयेन

1 For -vasati MS vaśati. *kulam° vasati* is not supported by Tib reading ḥdogs. pa. la hjug. go, which is not quite clear.

2 For *anvayād* Tib suggests *hetoh* (rgyus). The same phrase with the same Tib. rendering occurs also below See Tib [6]

3 Tib de. dan der. 4 Tib dus ma. yin. par, MS. *ākāla-*

5 Mark the grammatical irregularity in the sentence.

6 Tib slob tu hjug ste

7 Tib. de. ltar. na. sems can. hdi. dag. MS *samīsatvā*.

8 For *ghoṣānvayād* Tib. sgra hi rgyu. las byun ba.dan.

9 Tib. ci. yan. med. do MS-*na masti*.

१ ख, Tib. 16b. 1

कर्मणा। सचेत्संवर्तसंवर्तनीयं कर्म प्रत्युपस्थितं भवति ततो बाह्येन संवर्तप्रत्ययेन तेषां [3] संवर्तो भवति। नो तु यथाध्यात्मिकानामायुःक्षेपात्। तत्कस्य हेतोः। तथा हि। बाह्यभावा रूपिण औदारिकाश्चातुर्महाभूतिका स्थावरसन्ततयश्च न तु तथाध्यात्मिकाः। तेषां च भाजनानां [4]यद्विवर्त[1]-संवर्तनीयं कर्म तन्नियतं कल्पाक्षेपकं। न तत ऊर्ध्वं नार्वाक्॥

यत्पुनः सत्त्वसंख्यातं तस्य नास्ति कालनियमः। तथा हि। ते विचित्रकर्माभिसंस्काराः। तस्मात् [5]तेषां [2]परेणापि कल्पाद्भवति ततश्चार्वाग्यावद्दश संवत्सरादिति॥

स पुनः संवर्तस्त्रिविधो[3] वेदितव्यः। तेजःसंवर्तन्य[4]वीचिमुपादाय [१० क] यावद्ब्रह्मलोकात्संवर्तते। अप्संवर्तनी सकलं द्वितीयं [6] ध्यानं संवर्तते। वायुसंवर्तनी यावत्सकलं तृतीयं ध्यानं संवर्तते। चतुर्थे पुनर्ध्याने[5] तेषां चतुर्थध्यानभूमिकानां देवानां सहैव विमानैरुत्पत्तिः। सहैव विमानैः प्रच्युतिर्भवति। तस्मात्तेषां नास्ति संवर्तो। नास्ति संवर्तकारणं। [7]त्रीणि संवर्तनीशीर्षाणि। द्वितीयं ध्यानं तृतीयं ध्यानं चतुर्थं ध्यानं[6]॥

स पुनरयं लोको विंशति[7]मन्तरकल्पान् संवर्तते[8]। विंशतिमन्तरकल्पान् संवृत्तस्तिष्ठति। विंशतिमन्तरकल्पान्विवर्तते। [Tib 17b 1] विंशतिमन्तरकल्पान् विवृत्तस्तिष्ठति। ते भवन्त्यशीतिरन्तरकल्पाः। स पञ्च महा-

1 In Xylograph read hchags for chags.

2 According to Tib the word *para* is to be teken here in the sense of *adhika* (lhag pa) The reading here is as in the MS

3 Here MS adds *yāh samvartyānyā* which seems to be *yāh samvartanyah*, and an explanation of threefold *samvarta* This reading is not in Tib of *samvarta*. See AK III 74-102

4 AK III. 100[a-b] *samvartanyah punas tisro bhavanty agnyambuvāyubhih* In MS there is *samvartanyā* for *samvartanī* in *tejahsamvartanī*, aps *amvartanī*, and *vāyusamvartanī*

5 In Tib. *yāvat° dhyāne* is omitted.

6 AK III. 100[c-d]. *dhyānatrayam dvitīyādi śirṣam tāsām yathākramam*

7 MS here and in all the cases below in this section has *vimśatir*. About *kalpa* see AK III. 89

8 Here MS evidently by mistake adds *vimśatir antarakalpān vartate.*

कल्पः संख्याप्रज्ञप्तितः[1]। तत्र ब्रह्मलोके कल्पमायुः। स च सर्वपश्चात्संवर्तते। सर्वप्रथमं पुनः स एव विवर्तते॥

तस्य च कल्पस्या[2]न्यथा व्यवस्थानं द्रष्टव्यं। ब्रह्मकायिकानां विंशतिरन्तरकल्पाः कल्प इति कृत्वायुषो[2] व्यवस्थानं। ब्रह्मपुरोहितानां चत्वारिंशदन्तरकल्पाः कल्प इति कृत्वा[युषो व्यवस्थानं][3] [3]। महाब्रह्मणां षष्टिरन्तरकल्पाः कल्प इति कृत्वायुषो व्यवस्थानं॥

तेजःसंवर्तनी कतमा भवति। स समयो यदापरिमितायुषः सत्त्वा आयुषा हीयमाना यावदशीतिवर्षसहस्रायुषो भवन्ति। ते पुनरकुशलानां धर्माणां [4] समादानहेतोर्हीयमाना यावद्दशवर्षायुषो भवन्ति। ते पुनः संवेगप्राप्तानां कुशलानां धर्माणां समादानहेतोरायुषा वर्धमानाः पुनर्यावदशीतिवर्षसहस्रायुषो भवन्तीति यश्चायमपकर्षो[4] [5] यश्चायमुत्कर्षस्त[द्द्वयम्][5] अभिसमस्यान्तरकल्प इत्युच्यते। संख्याव्यवस्थानतः। तस्य[6] पुनरन्तरकल्पस्य त्रिभिर्निर्याणं भवति दुर्भिक्षेण रोगेण शस्त्रेण च[7]। तत्पुनर्दुर्भिक्षं यदा त्रिंशद्वर्षायुषो मनुष्या भवन्ति[8]। एवंरूपं च पुनः पुनः प्रज्ञायते[9]। [6] यज्जीर्णास्थ्यपि क्राथयित्वा[10] यात्रां कल्पयति। यच्च तत्र[11] कदाचित् कथञ्चिद्यवकलं[12] वा तण्डुलकलं वा कोल[13]कुलत्थतिलकलं वाधिगच्छति तं[14]

1 In Tib *saṃkhyāpra°* is omitted

2 Tib adds here *māna-* (tshad), so also in the following two sentences.

3 Tib. tsheḥi. tshad du ṇam par bzag go

4 Tib *evam* (de ltar) for *ayam*

5 Tib gñis.

6 Tib omits *saṃkhyāvyava°*, Cf. p 31, note 8

7 See AK, III. 99$^{a-b}$ *kalpasya śastrarogābhyam durbhikṣena ca nirgamaḥ. Aṅguttara Nikāya*, I 160

8 MS adds here *tadā prajñāyate.*

9 Tib *bhavati* (byuṅ or ḥbyuṅ. bar ḥgyur) for *prajñāyate*

10 Tib. *kvāthayitvā kvāthayitvā* (bskol. źiṅ bskol źiṅ)

11 Tib. adds here *śate* (brgya. la)

12 So in the following two words, too, evidently for *kaṇam* 'grain', Tib. ḥbru

13 So in MS. Here *kola* may mean 'black pepper' (*marica*?).

14 MS *sa*

१० क, Tib. 17b. 2

मणिरत्नमिव समुद्रे प्रक्षिप्य विकर्षति[1]। [7] ते च सत्त्वा यद्भूयसा निस्थामाः[2] पृथिव्यामुत्तानका निपतिता उत्थातुमपि न शक्नुवन्ति। एवंरूपेण दुर्भिक्षेण यद्भूयसा सत्त्वाः कालं कुर्वन्ति॥

तत्पुनर्दुर्भिक्षं परं सप्तवर्षाणि सप्तमासान्सप्ताहोरात्राणि भवति[3]। [Tib 18a. 1] ततः परेण निर्यातं वक्तव्यं।[4] ते च सत्त्वाः सङ्गम्य समा-[१० ख]गम्य मृदुकं संवेगं लभन्ते। तेषां तेन हेतुना तेन प्रत्ययेनायुषश्चाहानि[5]र्भवति दुर्भिक्षस्य च व्यावृत्तिः॥

यदा पुनर्विंशतिवर्षायुषो मनुष्या भवन्ति। तस्यैव[6] संवेगस्य[2] पुनर्विगमाद्धीयमानास्तदा बहव ईतय उपद्रवा उपायासा भवन्ति। ते व्याधिबहुला[7] यद्भूयसा कालं कुर्वन्ति। स पुनस्तेषां रोगः [8]परं सप्तमासान्सप्त चाहोरात्राणि भवति। [3] ततः परेण निर्यातो वक्तव्यः[9]। ततस्ते सत्त्वा मध्यसंवेगाः। तेन हेतुना तेन प्रत्ययेन पुनरायुषा [न][10] हीयन्ते। ते च रोगा न प्रवर्तन्ते॥

यदा पुनर्मनुष्या दशवर्षायुषो भवन्ति। तस्यैव संवेगस्य विगमादायुषा[11] हीयमाना[4]स्तदा तेषामन्योन्यं सत्त्वं दृष्ट्वा [12]तीव्रं वधकचित्तं प्रत्युपस्थितं भवति। ततस्ते यदेव तृणं वा शर्करां वा कठल्लं वा गृह्णन्ति तानि

1 Tib *rakṣati* (bsrun bar byed. do).

2 So the MS for *niḥsthāmānaḥ*.

3 But cf AK, III. 99c-d. *divasān sapta māsāṃśca varṣāṇi ca yathākramam*

4 MS here and below *niryāto vaktavyaḥ*, Tib thal. žes. byaho. For *niryāna* generally we have nes par ḥbyun in Tib.

5 MS. °*śca vihānir*, Tib tshe ḥgrub par mi. ḥgyur. la See note 7.

6 Tib de. ñid See next paragraph and note 8.

7 Tib nad man pos MS °*vihvalāḥ*

8 See note 1.

9 Tib adds de. ltar thogs na.

10 Tib tshe. ḥgrib. par. ma ḥgyur. la

11 Tib skyo. ba de. ñid. med. par gyur.pas. MS °*sya punar vaśam ādāyuṣā*. See note 3.

12 Tib. seems lit. to read *teṣāṃ sattvānāṃ anyonyadarśane* (sems. can. de. dag. gcig. gis. gcig. mthon. na).

१० ख, Tib. 18a. 1

भवन्ति तीक्ष्णानि शस्त्राणि सुनिशितानि। [5] यैस्ते[1]ऽन्योन्यं विप्रघातिकां कुर्वन्ति। तच्च[2] परं सप्तदिवसानि भवन्ति। ततः परेण निर्यातो वक्तव्यः॥

तेषां च सत्त्वानां तदा परमास्तिस्रो विपत्तयो भवन्ति। तद्यथा। आयुर्विपत्ति[6]राश्रयविपत्तिरुपकरणविपत्तिश्च। तत्रायुर्विपत्तिः परं दशवर्षाणि। तत्राश्रयविपत्तिः परं वितस्तिर्मुष्टिश्चाश्रयस्य परिमाणं भवति। तत्रोपकरणविपत्तिः। कोद्रवो[3]भोजनानां मग्र्यो भवति। केशकम्बलो वस्त्राणामग्र्यो भवति। शस्त्रमलङ्काराणामग्र्यं भवति। पञ्चरसाः सर्वेण सर्वमन्तर्धीयन्ते। सर्पीरसो[4] मधुरसस्तैलरस इक्षुविकाररसो लवणरसश्च। ततस्ते सत्त्वाः [5]अधिमात्रसंवेगा। [Tib. 18b 1] न पुनः संवेगात्परिहीयन्ते। तांश्चायुषः परिहाणीयानकुशलान्धर्मात्परिहायायुर्वीर्य[6]कारकान्कुशलान्धर्मान्समादाय[7] वर्तन्ते। अन्योन्यं सङ्गम्य समागम्य पुनरप्यायुषा [2] वर्धन्ते। वर्णेन [बलेन][8]सुखेनैश्वर्याधिपत्येन [च][9]वर्धन्ते। यावदशीतिवर्षसहस्रायुषो भवन्ति।[10]

एवं विंशतिरपकर्षा विंशतिरुत्कर्षाः। चत्वारिंशदपकर्षोत्कर्षा यदा निर्याता भवन्ति तदा सर्वं [3] पश्चिम उत्कर्षे नरकेभ्यः सत्त्वाश्च्यवन्ते[11] नोपपद्यन्ते। सकलच्युतौ च तेषां संवृत्तो लोको वक्तव्यो यदुत नरकसंवर्तन्या। यथा नरकसंवर्तन्यैवं [4] तिर्यक्संवर्तन्या प्रेतसंवर्तन्या॥

मनुष्येषु पुनरन्यतमः सत्त्वो धर्मताप्रतिलम्भिको[12] यावद्द्वितीयं ध्यान-

1 Tib. *tais* (de. dag gis) 2 Tib. de. yan.

3 MS neuter, and so *agryam* for *agryo* For Skt. *kodrava* Tib. tshi. tshe (*Mahāvyutpatti* 5670), but our text reads khre rgod, for Skt *priyangu* 'millet' 4 MS. *sarpirasaḥ*.

5 Tib adds here *jñāna* (śes) 6 Tib tse. ṇur. bar (?)

7 Tib yan dag. par blans. te; MS *pari° ya*.

8 Tib. adds stobs dan. 9 Tib. dan.

10 AK, III 92 *utkarṣa ekas te'śītisahasrād yāvad āyuṣaḥ*

11 Here after *na* Tib has *punar* (phyir)

12 Tib. chos ñid. kyis. thob. pahi. bsam. gtan meaning *dharmatayā labdhasamāpattikaḥ*.

१० ख, Tib. 18b. 6

मुपसम्पद्य विहरति। तस्यानु[5]शिक्षमाणा अन्येऽपि सत्त्वा धर्मताप्रतिलम्भिका यावद्द्वितीय['] ध्यानमुपसम्पद्य विहरन्ति। त इतश्च्युता आभास्वरे देवनिकाय उपपद्यन्ते। तदा चायं लोकः संवृत्तो वक्तव्यो यदुत मनुष्यसंवर्तन्या। यथा च मनुष्यसंवर्तन्या [6] एवं देवसंवर्तन्या॥

यदा च पञ्चगतिके लोकसन्निवेश एकोऽपि सत्त्वो न प्रज्ञायते[1] तदोपकरणसम्भवोऽपि न प्रज्ञायते। यदोपकरणसम्भवोऽपि न प्रज्ञायते तदा वृष्टिरपि न प्रज्ञायते। [7] देवे खल्ववर्षति येऽस्यां महापृथिव्यां तृणौषधिवनस्पतयस्त उच्छुष्यन्ते। इदमेव च सूर्यमण्डलं सन्तापकतरं[2] भवत्यकालवृष्टिपरिगृहीतं।[3] षट्प्रकारदाह्य[4]वस्त्वधिकार[5]तश्चा[Tib 19a 1]परेषा[6] सूर्यमण्डलानां प्रादुर्भावो [११क] भवति यदुत सत्त्वानामेव संवर्तनीकर्माधिपत्यतः। तानि पुनः सूर्यमण्डलान्यस्मात्सूर्यमण्डलाच्चतुर्गुणसंतापानि [2]प्रभावतः[7]। ते पुनः सप्त भूत्वा सप्त गुणं तापयन्ति।

षड्वस्तूनि कतमानि। कु (?) महा द्रा (?)[8] येषां द्वितीयेन सूर्यमण्डलेन शोषः। कुनद्यो ]3] महानद्यो यासां तृतीयेन सूर्यमण्डलेन शोषः। अनवतप्तं महासरो यस्य चतुर्थेन सूर्यमण्डलेन शोषः। महासमुद्रोऽस्य पञ्चमेन सूर्यमण्डलेनशोषः। षष्ठस्य चैकदेशेन [4] शोषः। सुमेरुर्महापृथिवी च ययोः[9] षष्ठेनैव सप्तमेन च सूर्यमण्डलेन सारतरविग्रहतया दाहः। तत[10] एव चार्चिर्वायुना प्रेरिता यावद्ब्रह्मलोकं दहन्ती परैति॥

[5] तान्येतानि भवन्ति पुनस्त्रीणि वस्तूनि। अप्सम्भवं वस्तु तृणादयो

1 Tib. *na vidyate* (med par gyur pa), so in the following cases.
2 Tib rab tu śas. cher. sreg pai. byed. do.
3 For this Tib. *avagrāhena*
4 Tib bsreg. par bya ba, MS *bāhya-*
5 Tib. *-sadbhāvataś* (yod pahi phyir) for *adhi°*
6 Tib. adds here *sannām*
7 Omitted in Tib.
8 MS illegible. Tib lten. ka. chun nu dan lten ka. chen po The word lten ka chun nu means 'a small pool or pond' (Skt. *billa,* also written *villa* from which there is *bila,* 'pit.' Cf *Uruvela, Uruvilva,* a town in Magadha and lten ka chen po means the same thing bigger (*mahā*) The exact Skt words could not be ascertained.
9 MS *yasya* Tib simply de. nī.
10 Tib. adds here *tasya* (de. ñid. kyi)

११ क, Tib 18b. 6

येषां प्रथमेनैव शोषः। तदेवाब्वस्तु[1] यस्यापरैः पञ्चभिः शोषः। स्थावरं सारविग्रहं [6] वस्तु यस्य द्वाभ्यां दाहः॥

तस्य खलु लोकसन्निवेशस्यैवं दग्धस्य ध्मातस्य[2] यथासूत्रमेव विस्तरेण मसिरपि न प्रज्ञायते छारिकापि न प्रज्ञायते।[3] इयता लोकः संवृत्तो भवति यदुत भाजनसंवर्तन्या। विंशतिश्चान्तरकल्पा अतिवृत्ताः। तथा संवृत्तश्च लोको विंशत्यन्तरकल्पांस्तिष्ठति॥

अप्संवर्तनी कतमा। यतश्च सप्त तेजःसंवर्तन्यः समतिक्रान्ता भवन्ति [19b. 1] ततो द्वितीये ध्याने सहजो[4]ऽब्धातुः सम्भवति यस्तं भाजनलोकं लवणमिवाब्धातुर्विलोपयति। स चाब्धातुस्तेनैव भाजनलोकेन सहान्तर्धीयते। अन्तर्हितश्च पुनस्तथैव विंशति[5]मन्तरकल्पांस्तिष्ठति॥

वायुसंवर्तनी कतमा। यतश्च सप्ताप्संवर्तन्योऽतिवृत्ता भवन्ति ततः पुनरेका तेजःसंवर्तनी भवति। तदनन्तरं तृतीये ध्याने सहजो वायुधातुः सम्भवति। यस्तं भाजनलोकं वायुनेवाङ्गं शोषयन्नन्तर्धापयति। स च वायुस्तेनैव सहान्तर्धीयते। तथा हि दृश्यते। एकत्यस्य वायुधातौ प्रकुपिते यावदस्थ्यपि कार्श्यमापद्यते। संवृत्तश्च तथैव [4] विंशात[6]मन्तरकल्पांस्तिष्ठति॥

एवं हि लोकस्य संवर्तो भवति॥

[ विवर्तः ]

विवर्तः कतमः। तेषामेव विंशतीनामन्तरकल्पानामत्ययात्पुनर्विवर्तकर्माधिपत्यात्सत्त्वानां विवर्तकल्पसमा[5]रम्भो वेदितव्यः। तत्र [7]तत्प्रथमत आकाशे तृतीयं ध्यानं विवर्तते। यदुत भाजनविवृत्त्या। यथा तृतीयं ध्यानमेवं द्वितीयं। एवं प्रथमं। तत्र तृतीयात्संवर्तशीर्षात्सत्त्वा [6] आयुः-

1 MS *tad evāvastu* Tib. lit *tad evāb vastu* (chuhi dnos po. de dag).

2 Not in Tib.

3 From *masir api* to *prajñāyate* Tib. differs a little reading dud. pa med. pahi thal bahi thag ma yan. med. par. hgyur. to

4 Not in Tib See below.

5 MS °*tirantara*°, also below.

6 MS °*rantara*° See note 5.

7 Tib. omits *tat*-

११क, Tib. 19b. 1

क्षयात्पुण्यक्षयाच्च्युत्वा तृतीये ध्यान उपपद्यन्ते। एवं सर्वत्र[1]। एवं द्वितीयात्संवर्तनीशीर्षाद्द्वितीये [7] ध्याने[1]। एवं सर्वत्र[1]॥

प्रथमात्पुनः संवर्तनीशीर्षादन्यतमः सत्त्व आयुःक्षयाद्याव[ ११ख ]त्पुण्यक्षयाच्च्युत्वा प्रथमध्यान उपपद्यते। यदुतब्रह्मलोके। स [Tib. 20a 1] तत्र भवति ब्रह्मा महाब्रह्मा। तस्यैकाकिन उत्कण्ठोत्पद्यते। अरतिः सञ्जायते। अहो वतान्येपि सत्त्वा इहोपपद्येरन्। तस्य च चित्ताभिसंस्कारा[2]दन्येऽपि सत्त्वा आयुः[2]क्षयाद्यावत्पुण्यक्षयाद् [द्वितीयाद्][3] ध्यानाच्च्युत्वा प्रथम एव ध्यान उपपद्यन्ते[4]। एवमेतानि त्रीणि ध्यानानि विवृत्तानि [3] भवन्ति। यदुत सत्त्वविवर्तन्यापि। ततश्चतुर्णां कामावचराणां देवनिकायानामाकाशे विमानानि प्रादुर्भवन्ति। सर्वेषां च तेषामाकाशविमानानां निर्माणवत्सम्भवो [4] द्रष्टव्यः। तेषु चाभास्वराद्देवनिकायात्सत्त्वाश्च्युत्वोपपद्यन्ते पूर्ववत्।

ततः पश्चादिह त्रिसाहस्रमहासाहस्र[लोकधातु][5]प्रमाणं वायुमण्डल[5]मभिनिर्वर्तते त्रिसाहस्रमहासाहस्रस्य [लोकस्य][6] प्रतिष्ठाभूतमवैमानिकानां सत्त्वानां [च][7]। तत्पुनर्द्विविधम्। उत्तानशयं पार्श्वशयं च।[8] येन तासामरं तिर्यग्विमानः [6] अधश्चायतनं[9] (?)। ततस्तस्योपरि तत्कर्माधिपत्येन काञ्चनगर्भा मेघाः सम्भवन्ति। यतो वृष्टिः सञ्जायते। ताश्चापो वायुमण्डले सन्तिष्ठन्ते। ततो वायवः [7] सम्भूयापः[10] संमूर्छयन्ति[11] कठिनी-

1 Tib. adds in these three cases *yojayitavyam* (sbyar. bar. byaho).

2 Tib. tshe. zad, MS *tapaḥ°*.

3 Tib gñis. pa.

4 MS adds here *tasya sabhāgatāyām.*

5 Tib. hjig rten gyi khams kyi. See here AK, III. 73-75

6 Tib. hjig rten dan

7 hog. gžir. gnas pa dan.

8 The MS is corrupt here. Tib. is also not quite legible. It appears to read des chu de dag. thad. kar yan mi. hbol. lhur du. yan. mi. hdzag go

9 From *tāsāmaraṃ* the text as not clear. 10 Tib omits *apaḥ.*

11 MS wrongly *samkarchayanti*, also below Tib. rightly ḥthas. pa. daṅ. sra. ba byed de.

११ ख, Tib. 19b. 6

कुर्वन्ति। सा भवति काञ्चनमयी पृथिव्यूर्ध्वश्चाधश्चोदकविमर्द[1] क्षमत्वात्॥

तस्यां विवृत्तायां पुनस्तस्योपरि[2] तत्कर्माधिपत्यादेव नानाधातुगर्भो मेघः सम्भवति। यतो [Tib 20b 1] वृष्टिः सञ्जायते। ताश्चापः काञ्चनमय्यां पृथिव्यां सन्तिष्ठन्ते। तथैव च पुनर्वायवः संमूर्छयान्त कठिनीकुर्वन्ति। तत्र च यः शुभोऽग्रः श्रेष्ठः प्रणीतो धातुस्ततो वायुसंहार [2] वशेन सुमेरुः सञ्जायते चतूरत्नमयः सुवर्णमयो रूप्यमयः स्फटिकमयो वैदूर्यमयः॥

यः पुनस्तत्र मध्यो धातुस्तस्मात्सप्त काञ्चनपर्वता अभिनिर्वर्तन्ते। तद्यथा [3] युगन्धरो विनतको ऽश्वकर्णगिरिः सुदर्शनः खदिरक ईषाधरो निमिन्धरश्च।[3] ते पुनरनुपरिपाटिकया सुमेरुं परिवार्य स्थिताः॥

सुमेरोः पुनः परिमाणमशीति। योजनसहस्रा[4]ण्युच्छ्रायेण तथा विस्तारेण। अशीतिरेवाप्सु निमग्नः। तस्य चार्धेन प्रमाणेन युगन्धरः। तत उत्तरोत्तरार्धप्रमाणतया तदन्येषां काञ्चनपर्वतानां विनतकादीनां निमिन्धरपर्यवसानानां [5] प्रमाणं वेदितव्यं। तेषामेव च पर्वतानां यानि कूटानि तत्प्रकारप्रभेदसाधर्म्येण तेषामपि[4] तानि नामानि द्रष्टव्यानि॥

हीनात्पुनर्धातोश्चतुर्षु सुमेरुपार्श्वेषु बहिः काञ्चनपर्वतानां चत्वारो द्वीपा अन्तर्द्वीपाश्चाष्टौ चक्रवाडश्च पर्वतो निमिन्धरस्य पर्वतस्यार्धप्रमाणेन। तेन च चातुर्द्वीपिकं[5] चक्रीकृतं।[6] असुरभवनानि चाधस्तात् सुमेरोरुदक[7]सन्निहितानि। हिमवांश्च पर्वतोऽनवतप्तस्य सरसः सामन्तेन।

1 MS °*vimarśya*° (?) Tib. hkhrug (√*kṣubh* 'to be agitated'), for *vimarśya* (?).

2 Evidently for *tasyā upari*.

3 See AK, III 48-49

4 MS *tepi*.

5 Here *cāturdvīpika* is Jambū, Pūrva-videha, Avaragodānīya and Uttarakuru See AK, III. 73.

6 Tib. des. gliṅ bźi pa. hkhor. lo bźin. du. bskor to.

7 MS *rdvaka* (?), Tib. chu The last part of the sentence in Tib. runs thus: ri. rab. chuhi. hog. tu. nub. pahi nan. na yod, do.

११ख, Tib 20b. 7

ततश्चाधस्ता[7]दष्टौ नरकस्थानानि। महानरकाणां प्रत्येकनरकाणां च। नरकाणां सामन्त[1] [१२क]नरकाणां च। एकत्यानां च तिरश्चां प्रेतानां॥

[Tib 21a. 1] ते पुनश्चत्वारो द्वीपाः। तद्यथा जम्बूद्वीपो पूर्वविदेहो ऽवरगोदानीय उत्तरकुरुश्च। तत्र जम्बूद्वीपः शकटाकारः। अर्धचन्द्राकारः पूर्वविदेहः। परिमण्डलो गोदानीयः। [2] चतुरश्रश्चोत्तरकुरुः॥[2]

अर्धसप्तमानि योजनसहस्राणि परिमाणेन जम्बूद्वीपः। सप्तयोजनसहस्राणि परिमाणेन पूर्वविदेहः। अर्धाष्टमानि योजनसहस्राणि परिमाणेनावरगोदानीयः। अष्टौ [3] योजनसहस्राणि परिमाणेनोत्तरकुरुः॥[3]

तेषां पुनः सप्तानां काञ्चनपर्वतानामन्तराले यदुदकं तदष्टाङ्गोपेतं। स चाभ्यन्तरः समुद्रः। तत्र नागानां भवनानि॥

अष्टाविमे नागाः कल्पस्था धरणिन्धराः। नन्द [4] उपनन्दो ऽश्वतरो मुचिलिन्दो[4] मनस्वी धृतराष्ट्रो महाकाल[5] एलपत्रश्च॥[6]

ते देवासुरं [5] संग्राममनुभवन्त्यपि प्रत्यनुभवन्त्यपि॥

शक्रस्य देवेन्द्रस्य बलं चत्वारि[7] नागकुलानि। अण्डजो नागो जरायुजः संस्वेदज औपपादुकश्च। चत्वारः[8] [6] सुपर्णिनः। अण्डजो जरायुजः संस्वेदज औपपादुकश्च॥

1 For this Tib reads ñen. kar. gyi which means *sambandhin*, 'a relative'

2 AK III 53-55

3 Cf. AK III 53 ff

4 Among the 82 names of Nāgarājas in the *Mahāvyutpatti* (§ CLXVIII) it is not read.

5 So in Tib reading nag. po chen po, but in MS (=Mahāvyutpatti, *loc cit* (25) simply *kālah* MS *mahākara*

6 MS simply *Elaḥ*, *loc cit* (37). Tib. adds here *te' pi devendrasya śakrasya balam* (de. dag kyan lhahi dbyn. po. bragya. byin. gyi dpun. yin. te). It is however found in Sanskrit text with slight variations

7 Tib. *caturvidhāni* (rnam. pa. bźi)

8 Not in Tib.

१२ ख, Tib. 20b. 6

तस्माच्चाभ्यन्तरात्समुद्राद्यद्बाह्यमुदकं स बाह्यः समुद्रः। तस्य च सुमेरोर्मूलत[1]श्चतस्रः परिषण्डाः। [7] प्रथमा परिषण्डा षोडशयोजनसहस्रपरिमाणा सुमेरोर्निर्गता। तस्यार्धार्धः[2] शेषाणां परिमाणं यथाक्रमं[3]। प्रथमायां करोटपाणयो द्वितीयायां रुधिरपाणय[Tib 21b 1]स्तृतीयायां सदामदा[4] श्चतुर्थ्यां मालाधराः।[5] उपरिमेरुतले[6] चतुर्षु कोणेषु चत्वारः[7] कूटाः पञ्चयोजनशतोच्छ्रायाः। तेषु वज्रपाणयो यक्षाः प्रतिवसन्ति॥[8]

[2] युगन्धरस्य च चतुर्षु पार्श्वेषु महाराजानां राजधान्यः। पूर्वपश्चिमदक्षिणोत्तरेषु यथाक्रमं धृतराष्ट्रविरूढकविरूपाक्षवैश्रवणानां[9]। सर्वेषु [3] काञ्चनपर्वतेषु तेषां महाराजानां ग्रामनिगमजनपदाः॥

हिमवतः पर्वतराज्ञः[10] सामन्तकेन सुरपार्श्वो नाम काञ्चनमयः प्राग्भारः पञ्चाशद्योजनायामस्तावद्विस्तार एव। [4] सुप्रतिष्ठस्य नागराजस्य सोऽधिवासः। स च शक्रस्य देवेन्द्रस्य सङ्ग्रामावचरः। तत्र च सुप्रतिष्ठितो नाम वृक्षराजः[11] सप्ततालपंक्तिपरिवारः। मन्दाकिनी[12] च पुष्करिणी [5] [13]शतपरिवारा तस्यैव सुप्रतिष्ठितस्य क्रीडाभूमिः। यत्रासौ कामरूपी भूत्वा तस्याः पुष्करिण्या बिसमृणालान्यावृह्य परिभुंक्ते। स च पञ्चहस्तिनीशतपरिवारः॥

तस्यैव सामन्तकेना[6]नवतप्तं महासरः पञ्चाशद्योजनगम्भीरं पञ्चाशद्योजनविस्तारं सुवर्णवालुकास्तृत[ १२ख ]मष्टाङ्गोपेतपानीयसम्पन्नमभिरूपं दर्श-

1 Tib. lit. *nikaṭe* (drun na). The word *pariṣaṇḍā* means a particular part of a house It is taken here in the secondary sense
2 MS *ardhārdhau*.
3 Tib adds *yojyate*(sbyar)
4 MS *-mattāḥ* for *-madāḥ*.
5 AK. III. 64. *karoṭapāṇayas tatra mālādharāḥ sadāmadāḥ*.
6 Tib lit. *Sumeru-* (ri rab) 7 MS *catasraḥ*.
8 AK. III. 65 *vidikṣu kūṭāś cātvāra uṣitā vajrapāṇibhiḥ*.
9 MS *vaiśramaṇānām*. 10 For *parvatarājasya*.
11 Tib śiṅ. gi rgyal po; MS omits *-rāja*
12 Tib. dal gyis (Xylograph gyi) ḥbab, but generally dal gyis ḥbab pa. 13 Tib. adds before it *pañca-* (lṅa).

१२ ख, Tib. 21b. 1

नीयं प्रासादिकं। यतश्चतस्रो महानद्यः सम्भेदं गच्छन्ति। तद्यथा गङ्गा [7] सिन्धुः सीता वक्षुश्च[1]।

तस्मिंश्च सुमेरुतले देवपुरी सन्निविष्टा दशयोजनसहस्रपरिमाणा दैर्घ्येण वैपुल्येन च। अन्यत्र तेषां देवानां ग्रामनिगमजनपदाः। तस्य सुमेरोश्चत्वारि मुखानि। जम्बूद्वीपादयश्चत्वारो द्वीपाः। [Tib 22a. 1] ते तस्य भवन्ति चत्वारः पार्श्वाः। यो जम्बूद्वीपमुखः पार्श्वः स वैदूर्यमयः। यः पूर्वविदेहमुखः स रूप्यमयः। योऽवरगोदानीयमुखः [2] स सुवर्णमयः। य उत्तरकुरुमुखः स स्फटिकमयः[2] ॥

जम्बूद्वीपस्य च सामन्तकेन चक्रवर्तिपथः सुवर्णमयः[3] चतुर्महाराजकायिकसत्त्व· [4]महासमुद्रनिमग्नस्तिष्ठति। चक्रवर्तिराजस्य[5] प्रादुर्भावाज्जानुमात्रं महासमुद्रात्पानीयं शुष्यति ॥

अनवतप्तस्य सरसो दक्षिणभागेन महाजम्बूर्यस्य नाम्नायं जम्बूद्वीपः। [3] तस्योत्तरभागेन महती कूटशल्मली। यत्र चत्वारः[6] सुपर्णिनः प्रतिवसन्ति ॥

तेषां चतुर्णां द्वीपानामेकैकस्य द्वीपस्य[7] द्वावन्तरद्वीपौ। एकश्चात्र राक्षस-[8]द्वीपः ॥

एवमभिनिर्वृत्ते भाजनलोक [4] आभास्वराद्देवनिकायात्सत्त्वाश्च्युत्वेहोत्पद्यन्ते[9]। पूर्ववदेव [5] प्रथमकल्पसंवेदनीयेन कर्मणा। तच्च परमग्रं श्रेष्ठं कामावचरं कर्म। तदैव च तस्य कर्मणः फलाभि[6]निर्वृत्तिर्नान्यदा। ते च सत्त्वास्तस्मिन्समये प्रथमकल्पका इत्युच्यन्ते। ते च भवन्ति रूपिणो मनोमया

---

1 The river Vaksu is often read as Vanksu showing Prakritism found in many texts. It is generally held to be Oxus see *Raghuvamśa*, IV 67 (variants). For these two rivers Vaksu and Sītā see Poussin's notes, *Kośa*, iii, 147-148.

2 In Tib. *Avaragodānīyamukha* and *Uttarakurumukha* are *sphaṭikamukha* and *suvarṇamukha* respectively.

3 MS *savarna* 4 Both Tib and Skt. indistinct

5 Tib hkhor los sgyur. bahi. rgyal. po. MS *cakravartinah.*

6 Tib. *caturvidhāh* (rnam pa. bźi. pa).

7 Tib. adds one *dvau* more. 8 MS *rākṣasī-*.

9 For generally *upapadyante*.

इत्यनुसूत्रमेव सर्वं। न च तस्मिन्समये गृहागारग्रामसन्निवेशो भवति। [7] समतला केवलं सर्वा मही भवति॥

ततस्तेषां सत्त्वानां भूमिरसः प्रादुर्भवति। एवं क्रमेण पर्पटकं[1] वनलता अकृष्टोप्तशालिरकणो[2]ऽतुषः। ततः कणश्च तुषश्च तण्डुलफलं [Tib 22b. 1] पर्यवनह्यति।[3] ततः षण्डावषण्डे (?) तिष्ठते शालिः[4]। ततस्ते सत्त्वास्तत्परिग्रहे सन्दृश्यन्ते। ततस्तेषां सत्त्वानां रसादिपरिभोगाद्दौर्वर्ण्यं प्रादुर्भवति। प्रभावश्चान्तर्धीयते। यश्च प्रभूततरं भुङ्क्ते [2] स दुर्वर्णतरो भवति गुरुककायतरः। ततः सत्त्वः सत्त्वमवमन्यते। तेषामकुशलानां धर्माणां समुदाचारहेतोरुत्तरोत्तररसाद्यन्तर्धानं भवति। यथासूत्रमेव विस्तरेण। [3] ततोऽन्योन्यं चक्षुषा चक्षुरुपनिध्याय[5] प्रेक्षन्ते। ततः संरज्यन्ते। ततः स्त्रीपुरुष[6]-संवर्तनीयेन कर्मणैकत्यानां स्त्रीन्द्रियं प्रादुर्भवति एकत्यानां पुरुषेन्द्रियं। ततो विप्रतिपद्येते[7] [4] द्वयद्वयसमापत्तितः। ततो विजुगुप्स्यन्ते परैः। ततस्तन्निमित्तमगाराणि [१३क] मापयन्ति। शालिपरिग्रहनैमित्तिकं च क्षेत्रपरिग्रहमपि कुर्वन्ति। ततस्तन्नैमित्तिकं[8] अदत्तादानमाकर्षणपराकर्षणं[9] प्रज्ञायते।[10] ततस्तन्निमित्तं राजानं स्थापयन्ति निषेद्धारं। [5] स च भवति महासम्मतो। एवं तस्य च क्षत्रियमण्डलस्य यथासूत्रं ब्राह्मणवैश्यशूद्रमण्डलानां लोके प्रादुर्भावो भवति।

तस्य च तदाश्रयसन्निविष्टस्यावभासस्यान्तर्धाना[6]दन्धकारस्य लोके प्रादुर्भावो भवति। ततः सूर्याचन्द्रमसोर्नक्षत्राणां च लोके प्रादुर्भावो भवति॥

---

1 Tib. žag, film (*śara*)

2 For this Tib. śun phrags. med, but the meaning is not quite clear śun pa means *valkala* 'bark' (*tvac*)

3 *Paryavanahyate* ? In the *Divyāvadāna* (p.120 l 3, p. 125. l.2) *parvavanaddha* is 'overgrown'.

4 Here Tib. appears to read something like dehi hog tu. sā. lu tha. rtser. skye. bar. hgyur. It is not quite clear.

5 Tib tshugs. (? chags. ?) su-

6 In Tib. one expects to read here skyes.

7 Tib. ñal. po. byed which means 'to practise co-habitation'. Thus the Skt. word has here a new sense.

8 MS °ttiki. Tib. lit. *tanmūlāt* (dehi gži. las).

9 °*karṣaṇā*. 10 Tib. *jāyate* (ḥbyun).

१३ क, Tib. 22b. 6

तत्र सूर्यमण्डलस्य परिमाणमेकपञ्चाशद्योजनानि। चन्द्रमण्डस्य पुनः पञ्चाशत्। तत्र सूर्यमण्डलं तेजःस्फटिकमयं। [7] चण्द्रमण्डलं पुनरुद्कस्फटिकमयं। तयोः पुनश्चन्द्रमण्डलं शीघ्रतरगति च वेदितव्यमनियतगति[1] च। सूर्यमण्डलं पुनर्द्वयोर्द्वीपयोर्युगपदालोकं करोति द्वयोर्युगपदन्धकारं। तत्रै[Tib. 23a 1]कत्र मध्याह्न[2] एकत्रोदय एकत्रार्धरात्र्येकत्रास्तङ्गमः। सर्वेषां चन्द्रसूर्यनक्षत्रगणानां सुमेरोरर्धेन गतिसञ्चारः। स पुनर्युगन्धरसमः[3]। ते पुनर्यदा श्लिष्टाः सुमेरोर्वहन्ति तदा निदाघः प्रज्ञायते। [2] यदा विश्लिष्टा भवन्ति तदा हेमन्तः प्रज्ञायते। तेनैव[4] च हेतुना क्षिप्रमस्तगमनं वेदितव्यं। चन्द्रमण्डले[5] पुनरूर्ध्वमीषद्वङ्कीभवत्यर्धचन्द्रदर्शनं। तस्य[6] परभागो [3]ऽर्वाग्भागावृतो न दृश्यते। यथा यथा वङ्कीभवति तथा तथा सुष्ठुतरं सम्पूर्णः संदृश्यते। कृष्णपक्षे पुनर्यथायथावमूर्धीभवति तथा तथा ह्रासः संदृश्यते। महासमुद्रे मत्सकच्छपादीनां प्रतिबिम्बकोत्पादा[4]न्मध्ये चन्द्रमसः श्यामता[7] प्रज्ञायते[8]। नक्षत्राणां पुनः परिमाणं परम[9]ष्टादश क्रोशा[10] मध्यानां दश क्रोशाः सूक्ष्माणां चत्वारः॥

तस्मिंश्चतुर्वर्णप्रसव[11] इष्टानिष्टपञ्चगतिवेदनीयकर्मसमारम्भो [5] भवति। ततोऽन्यतमः सत्त्वः संक्लिष्टेनाधिपत्यसंवर्तनीयेन कर्मणा यमो राजोत्पद्यते। तस्यानन्तरं नरकपाला निर्मितोपमा [6] उत्पद्यन्ते यातनाकारणानिर्वे-

---

1 Tib. *tena* (des. na).

2 MS neuter.

3 MS *sā° ndharaḥ samaḥ* Tib de. yan. gñaḥ. śin. hdzin. ni dan. mñam mo

4 Tib simply *tena* (de.ḥi. phyir).

5 Tib. reads here yid. tsam. gyis, literally meaning thereby *manomātrena*. But it does not suit.

6 Tib dehi, MS *saumya*.

7 Tib. ri. ri. bon. The first ri seems to be redundant. ri. bon is *śaśa* 'hare'.

8 Tib. snan (*dṛśyate*)

9 *paramāṇām*? Tib. nan. gi. tshe, but it does not give the sense of the Skt. word.

10 In Tib. read rgyan. grags for brgyan. grags.

11 Acc to Tib it is locative (byun. ba. na).

१३ क, Tib, 23a, 6

[र्तका][1] लोहा.[2]द्यो नारकश्चाग्निः प्रादुर्भवति। ततस्ते यथाकर्मोपगाः सत्त्वास्तत्रोत्पद्यन्ते तदन्यासु च गतिषु ॥

[7] एवं कृत्वा कोटिशतं चातुर्द्वीपिकानां [१३ख] कोटिशतं सुमेरूणां कोटिशतं षण्णां कामावचराणां देवनिकायानां कोटिशतं ब्रह्मलोकानां त्रिसाहस्रेषु युगपद्विवर्तते संवर्तते च। ते चैते भवन्ति त्रयो लोकधातवः। [Tib 23b.1]

साहस्रिकश्चूडिक[3]स्तद्यथा सहस्रं चन्द्राणां सहस्रं सूर्याणां सहस्रं यावद्ब्रह्मलोकानामैकध्यमभिसंक्षिप्य।[4] यत्खलु चूडिकानां सहस्रं स द्विसाहस्रो मध्यः[5]। यत्खलु मध्यानां सहस्रं [स] त्रिसाहस्रो महासाहस्रो लोकधातुः ॥

[2] एवं पूर्वस्यां दिशि दक्षिणस्यां पश्चिमायामूर्ध्वमधो। नास्त्यन्तो नास्ति पर्यन्तो लोकधातूनां संवर्तमानानां विवर्तमानानां च। तद्यथा वर्षाधारे देवे वर्षति नास्ति वीचि[6]र्वान्तरिका[7] वा वारिधाराणां प्रपतन्तीनां सर्वासु दिक्षु [3] एवमेव सर्वासु दिक्षु। नास्त्यन्तो नास्ति च पर्यन्तो लोकधातूनां संवर्तमानानां च विवर्तमानानां च ॥

यश्च त्रिसाहस्रो महासाहस्रो लोकधातुरेतावद्[8] बुद्धक्षेत्रमित्युच्यते। यत्र[9] तथागता उत्पद्य बुद्धकर्माणि [4] कुर्वन्त्यपरिमाणेषु लोकधातुषु ॥

एवं च पुनर्विवृत्ते लोकसन्निवेशे पञ्च गतयः प्रज्ञायन्ते[10] न[ा]रकास्तिर्यञ्चः प्रेता देवा मनुष्याश्च। चतस्रो योनयोऽण्डजा [5] जरायुजाः संस्वेदजा

---

1 Tib. byed.

2 MS °*hyādayah*. Tib. *lohatāmrādayah* (lcags. zans la. sogs pa)।

3 In Mahāvyutpatti, § CLIV, 1 it is *sāhasracūḍika*

4 Tib adds *kṣudrah* (chun. nuho) See AK, III 73-74
*caturdvīpakacandrārkamerukāmadivaukasām* ।
*brahmalokasahasram ca sāhasraś cūḍiko matah* ॥
*tat sahasram dvisāhasro lokadhātustu madhyamah* ।
*tat sahasram trisāhasrah samasamvartasambhavah* ॥
For details see *Kośa*, iii, p 170.

5 Generally it is read as *madhyamah*.

6 So in the MS. Tib. *chedah* (hchad)

7 In the sense of *antara*

8 Tib. *etad* (de ni).

9 Tib. *tatra* (der).

10 Tib. *jāyante* (hbyun. bar. ḥgyur. ro)

१३ ख, Tib. 24b. 1

औपपादुकाश्च। षडाधाराः।[1] दशविधः कालः। ऋतुः संवत्सरो मासोऽर्धमासो दिवसो रात्रिः क्षणस्तत्क्षणो[2] [6] लवो मुहूर्तश्च। सप्त परिग्रहवस्तूनि[3]। दश कायपरिष्काराः। दश कामोपभोगाः।[4] ते पुनर्यथा मध्यमे।[5] अष्टावभीक्ष्णानु[6]विचरितानि। अष्टौ लोक [7[ धर्माः। लाभोऽलाभो यशोऽयशो सुखं दुःखं निन्दा प्रशंसा [च]।[7] त्रयः पक्षाः। मित्रपक्षोऽमित्रपक्ष उदासीन[8]पक्षश्च। त्रिविधा लोक[9][Tib. 24a. 1]यात्रा। त्रिविधा कथा।[10] द्वाविंशतिविधः संरम्भः[11]। चतुःषष्टिः सत्त्वनिकायाः। अष्टाववस्थाः[12]। चतस्रो गर्भावक्रान्तयः। चत्वार ईर्यापथाः। षड्विधा जीविकाः। षड्विधा आरक्षा [2] सप्तविधं दुःखम्। सप्तविधो मानः। सप्तविधो मदः। चत्वारो व्यवहाराः। संबहुलानि च व्यवहारपदानि[13]॥

नरकगतिः कतमा। बीजफलसंगृहीता [3] नारकाः स्कन्धा यच्च कर्म नरकवेदनीयं। यथा नरकगतिस्तिर्यग्गतिः प्रेतगतिर्देवगतिर्मनुष्यगतिश्च यथायोगं द्रष्टव्याः।

अण्डजा योनिः [4] कतमा। ये सत्त्वा अण्डकोशमभिप्रदाल्य निर्गच्छन्ति। ते पुनः कतमे। तद्यथा। हंसक्रौञ्चमयूरशुकशारिकाप्रभृतयः॥

जरायुजा योनिः कतमा। ये सत्त्वा जरायु[5]परिवेष्टिता जरायु भित्त्वा निर्गच्छन्ति। ते पुनः कतमे[14]। हस्त्यश्वगोगर्दभप्रभृतयः॥

---

1 See p 46, l. 6

2 Tib supports it reading dehi. skad. cig.

3 AK II. 287 See below.

4 Tib. lons. spyod, MS °*pabhoginah*

5 Tib lun. bar. ma. las hbyun. ba, madhyama āgame ?

6 Tib. rgyun. mi. hchad per. rjes. su. spyod, See below. MS. *abhāksnātta*(?)

7 Tib dan.

8 Tib. lit *itara* (tha. mal) evidently in the sense of 'other'. The Tib. word generally means an ordinary, or vulgar man.

9 Tib. hjig.gyi. tshul. lam. spyod. pa

10 *Dharmyā, adharmyā, tadanyā ca* See below:

11 Tib ñes rtsom.

12 Tib. dus. literally *kālaḥ*.

13 For *pada* Tib. lit, *vastu, ādhāra* or *mūla* (gži).

14 Tib. adds *tadyathā* (hdi. lta. ste).

१३ ख, Tib. 24a. 1

संस्वेदजा योनिः कतमा। ये सत्त्वा अन्यतमान्यतमं स्वेदमागम्योत्पद्यन्ते। ते [6] पुनः कतमे[1]। कृमिकीटपतङ्ग[2]तिलमारकादयः॥

औप[१४क]पादुका योनिः कतमा। ये सत्त्वाः कर्माधिपत्यात्परिपूर्णषडायतना जायन्तेऽन्यतरषडायतना वा। ते पुनः कतमे। [7] तद्यथा। नारका देवा एकत्याश्च[3] तिर्यक्प्रेतमनुष्याः॥

षडाधाराः कतमे। प्रतिष्ठाधाराः। तद्यथाधस्ताद्वायुमण्डलं [जल][4]मण्डलं पृथिवीमण्डलं च। [24b 1] अधस्तात्सत्त्वानामपतनस्यैष योनिस्तस्मादाधार[5] इत्युच्यते। निलयाधारो द्वितीयः। स पुनर्गृहमण्डपादिः।[6] परिस्रवेभ्योऽनुपघातस्यैष योनिः। तस्मादाधार इत्युच्यते। ते पुनर्गृह-[2]मण्डपादयोऽभिसंस्कारिका अनभिसंस्कारिका वैमानिका नैर्माणिकाश्च समासतः। सुभिक्षाधारस्तृतीयः। कवडङ्कारस्याहारस्यैष योनिस्तस्यदाधार इत्युच्यते। क्षेमाधार[7]श्चतुर्थः। सत्त्वानां [3] शस्त्रादिभिरविलय[8]गमनायैष योनिस्तस्मादाधार इत्युच्यते। सूर्याचन्द्रमसौ पञ्चम आधारः। रूपाणां दर्शनायैष योनिस्तस्मादाधार इत्युच्यते। आहाराधारः षष्ठः। ते पुनश्चत्वार आहाराः। कवडङ्कार आहारः स्पर्शो [4] मनःसञ्चेतना विज्ञानं च[9]। कायस्य स्थितय उपस्तम्भायैष योनिस्तस्मादाधार इत्युच्यते॥

---

1 Tib. odds. *tad yathā* (hdi lta. ste).

2 For *patanga* Tib. phyem. lem the meaning of which is not known to me. What is *tilamāraka*? For it Tib. has śin srin meaning in Skt *ghuṇa* 'wood-moth'.

3 MS *tadekatyāś ca*. 4 Tib. chuhi. 5 Cf. MS

6 MS *mādakādayah*. Tib. first reads *mandapa* (khan. khyim), then *harmya* (yan. thog) Cf. the following sentence.

7 Tib. bde. ba. ni gži. MS *ksamādharakaś*.

8 Tib. ma run. pa, Skt. *vyāla* in the sense of *krūra, ksudra* 'mischievous'. Tib. translator seems to have misread *vilaya* for *vyāla*.

9 AK, iii. 122 See Majjhima Nikāya, I. 261. cattāro' me bhikkhave āhārā bhūtānam. Poussin's note. *Kośa,* iii. p.122. from Vyākhyā. catvāra āhārā bhūtānāṃ sattvānāṃ sthitaye sambhavaisinām

• ,१३ ख, Tib. 24a .5

सप्त परिग्रहवस्तूनि। कतमानि। आत्मा मातापितरौ[1] पुत्रदारं दासीदासं कर्मकर[5]पौरुषेयं [2]मित्रामात्यज्ञातिसालोहितं क्षेत्रवस्तु गृहवस्तु आपण(?)[3]वस्तु पुण्यक्रियावस्तु कर्मान्तप्रयोगवस्तूनि कोशसन्निधिश्च सप्तमं वस्तु ॥[4]

दश च परिष्काराः। कतमे। भोजनं पानं यानं वस्त्रमलङ्कारो हास्यगीतनृत्यवादितं गन्धमाल्यविलेपनं भाण्डोपस्कर आलोकः स्त्रीपुरुषपरिचर्या च ॥[5]

अष्टावभीक्ष्णानुविचरितानि [7]। कतमानि। यानि लोकेऽभीक्ष्णमनुविचरन्ति। तद्यथा कौपीनप्रच्छादनं कायपरिचर्येर्यापथान्तरकल्प आहारः स्वप्नो मैथुनं तत्प्रतिसंयुक्तो व्यायामस्तत्प्रति[Tib. 25a 1]संयुक्ता च कथा ॥

त्रिविधा लोकयात्रा कतमा। तद्यथा आलपनसंलपनप्रतिसंमोदना आवाहविवाहामन्त्रणनिमन्त्रणा[6]भक्षणसंभक्षणानि।[7] [2] उत्पन्नोत्पन्नेषु चाधिकरणेष्वन्योन्यसहायक्रिया ॥

त्रिविधा कथा कतमा। धर्म्याऽधर्म्या तदन्या च। धर्म्या कथा कतमा। येयं कथार्याभिसंलेखिकी[8] [3] चेतोविनिवरणा[9]पाकरणी (?)। विस्तरेण

---

cānugrahāya. ktāme catvārah. kavalīkārāhāra audārıkaḥ sūksma śc āhārah prathamah. sparśo dvıtīyah manahsamcetanā trtīyah vıjñānam āhāraś caturthah.

1 MS *mātāpıtaram.*

2 According to Tıb *pauruseya* means one who subsısts by the wages he earns (žo śes. htsho. ba), a day labourer.

3 Tıb. žon. dgram. pahı. dnos po.

4 Tıb lıt. *dhanādıś ca* (nor. sogs. pahı). For *vastu* see Poussıns *Kaśa*, ıı. 286-7.

5 For 27 dıfferent *pārıṣkāras* see Mahāvyutpattı, 5887—5913

6 No *sandhı* ın MS.

7 For *saṃbhakṣana* Tıb. hdus. sın. za. ba. lıt. meanıng *samājakṣetra* (or *maṇdala-*) *bhaksaṇa.*

8 For *abhısaṃlekhıkī* Tıb reads yo. byad. bsñuns. pa.

9 MS *°varaṇam sāmpreyagāmınī.* Tıb. reads sgrıb. pa. bsal. bar. ḥgyur. bahı.

१४ क, Tib. 25a. 1

यथासूत्रमेव । अधर्म्या [कतमा][1] । या क्लिष्टचेतसः[2] [पिण्डपातादि-][3] कथा । अव्याकृतचेतसः[4] [4] पुनस्तदन्या कथा[5] ॥

[१४ख] द्वाविंशतिविधः संरम्भः[6] । कतमः । तद्यथा कंसकूटतुलाकूटमानकूटमिथ्याकर्मान्तप्रयोगो [5] कलहो भण्डनं विग्रहो विवाद आक्रोशनं रोषणं परिभाषणं तर्जनं ताडनं वधो बन्धनं रोधनं छेदनं प्रवासनं[7] शाठ्यं वञ्चनं निकृति [6] मृषावादश्च ॥

चतुःषष्टिः सत्त्वनिकायाः । कतमे । तद्यथा नारकास्तिर्यञ्चः प्रेता [देवा][8] मनुष्या क्षत्रिया ब्राह्मणाः वैश्याः शूद्राः स्त्रियः पुरुषाः [7] पण्डका हीना मध्याः प्रणीता गृहिणः प्रव्रजिताः कष्टतपसो[9] [ऽकष्टतपसः][10] सांवरिका [Tib 25b. 1] असांवरिका नैवसांवरिकानासांवरिका वीतरागा अवीतरागा मिथ्यात्वराशिनियताः सम्यक्त्वराशिनियता अनियतराशि [2] नियता भिक्षवो भिक्षुण्यः शिक्षमाणाः श्रामणेराः श्रामणेर्य उपासकाः उपासिका प्रहाणिकाः[11] स्वाध्यायकारका वैयावृत्यकराः [3] स्थविरा मध्या नवका आचार्या उपाध्यायाः सार्धविहारिणोऽन्तेवासिका आगन्तुकाः[12] सङ्घव्यवहारका[13] लाभकामाः सत्-

---

1 Tib. gan. śe. na

2 In Tib. read sems. kyis for sems. gyis. Accordingly the reading will be *cetasā*.

3 Tib. kha. zas la sogs MS *anādi-*.

4 In Tib. read sems. kyi for sems. kyis. Accordingly the reading will be *cetasā* as before and *kṛtā* (byas. pa,) is to be added here

5 Tib. adds *iti* (žes. byaho) According to it Section III (bam po gsum. pa) ends here.

6 Tib ñes rtsom, lit. *doṣārambha*.

7 MS adds here *ca*.

8 Tib. lha. rnams.

9 Tib. dkah. thub drag po can. rnms, MS *tamasah*

10 According to Tib. dkaḥ. thub. drag. po. can. ma. yin. pa. rnams.

11 Tib. spon. ba. pa. rnams. Literally those who renounce all.

12 Tib. blo. bur. du. ltags. pa, generally we have hons for ltags

13 Tib. dge. ḥdun. gyi. las. byed. pa. rnams lit. *sanghakarmakārakāḥ*.

कारकाम्रः[4]संलिखिता[1] वहुश्रुता ज्ञातमहापुण्या[2] धर्मानुधर्मप्रतिपन्नाः सूत्रधरा विनयधरा मातृकाधराः पृथग्जनाः [5] दृष्टसत्याः शैक्षा अशैक्षाः श्रावकाः प्रत्येकबुद्धा बोधिसत्त्वास्तथागताश्चक्रवर्तिनश्च ॥

ते पुनश्चक्रवर्तिन एकद्वीपिका [6] द्विद्वीपिकास्त्रिद्वीपिकाश्चतुर्द्वीपिकाश्च । तत्रैकद्वीपिकस्यायसं चक्रं प्रादुर्भवति । द्विद्वीपिकस्य ताम्रमयं [7] त्रिद्वीपिकस्य रूप्यमयं चतुर्द्वीपिकस्य सुवर्णमयं ॥

अष्टाववस्थाः । कतमाः । तद्यथा गर्भावस्था जातावस्था[3] दहावस्था कुमारकावस्था युवावस्था मध्या[Tib 26a. 1]वस्था वृद्धावस्था जीर्णावस्था च । तत्र गर्भावस्था कललादयः । जातावस्था पुनस्तत ऊर्ध्वं । जीर्णावस्थाया-['] दहावस्थाया ['] च न परिसर्पणक्रीडनसमर्थो भवति । कुमारा[2]वस्था तत्समर्थस्य । युवावस्था कामोपभोगसमर्थस्यात्रिंशत्कस्य । मध्यावस्था पञ्चाशत्कस्य । वृद्धावस्था सप्ततिवर्षस्य । तत ऊर्ध्वं जीर्णावस्था ॥

चतस्रो गर्भावक्रान्तयः । कतमाः । तद्यथा । [3] सम्प्रजान[4]न्प्रविशत्यसम्प्रजानंस्तिष्ठति निष्कामति । सम्प्रजानन्प्रविशति तिष्ठत्यसम्प्रजानन्निष्कामति । सम्प्रजानन्प्रविशति तिष्ठति निष्कामति । असम्प्रजानन्प्रविशति तिष्ठति निष्कामति । तत्र प्रथमा चक्र[4]वर्तिनः । द्वितीया प्रत्येकबुद्धस्य । तृतीया बोधिसत्त्वस्य । चतुर्थी तदन्येषां सत्त्वानां ॥

षड्विधा जीविका कतमा । तद्यथा कृषिर्वणिज्या गोरक्ष्यं[5] राजपौरुष्यं [5] लिपिगणना[6]भ्यसन[7]संख्यामुद्रा [ः] । तदन्यानि शिल्पस्थानानि ॥

---

1 Tib.-yo. byed bsñuns. pa. rnams In Skt it may be *upaskṛtā* 'furnished'.

2 Tib mkhas śin bsod nams dan. ldan. pa. rnams *patupunyavantah* thus differing a little from the Skt text

3 Omitted here in Tib.

4 MS - *nam* for -*nan*, also in the following sentences Tib clearly supports the present participle form reading bśin du after the verb, such as śes bśin du, *jānan* or *samprajānan*

5 Tib. *pāśupālya* (phyugs. pa so pa)

6 In the sense of *ganita*, Tib rtsi.

7 For this Tib. reads śod. rgod pa The meaning is not clear

१४ ख, Tib. 25b. 3

षड्विधा रक्षा कतमा। तद्यथा हस्तिकायोऽश्वकायो रथकायः पत्तिकायः [6] सन्निधि[1]बलं मित्रबलं च ॥

सप्तविधं दुःखं। कतमत्। जातिर्जरा व्याधिर्मरणमप्रियसंयोगः प्रियविनाभाव इच्छाविघातश्च ॥

सप्तविधो मानः। कतमः। [7] मानोऽतिमानो मानातिमानो[2] ऽस्मिमानोऽभिमान ऊनमानो [ १५ क ] मिथ्यामानश्च ॥

सप्तविधो मदः [कतमः]।[3] आरोग्यमदो यौवनमदो [Tib 26b 1] जीवितमदः कुलमदो रूपमद ऐश्वर्यमदः श्रुतमदश्च ॥

चत्वारो व्यवहाराः कतमे। दृष्टो व्यवहारः श्रुतो मतो[4] विज्ञातो व्यवहारः।[5] [2] दृष्टो व्यवहारः कतमः। यदनेन बहिर्धा प्रत्यक्षीकृतं भवति चक्षुषा[6] तदुपादाय यत्परेषां व्यवहरत्ययमुच्यते दृष्टो व्यवहारः॥ श्रुतो व्यवहारः कतमः। यत्परतः श्रुतं भवति तदुपादाय यत्परेषां व्यवहरति॥ [3] मतो व्यवहारः कतमः। यदनेन न दृष्टं भवति न श्रुतमपि तु स्वयमेव चिन्तितं तुलितमुपपरीक्षितं तदुपादाय यत्परेषां व्यवहरति॥ विज्ञातो व्यवहारः कतमः। यदनेनाध्यात्मं प्रति[4]वेदितं भवत्यधिगतं स्पर्शितं[7] साक्षात्कृतं च भवति तदुपादाय यत्परेषां व्यवहरत्ययमुच्यते विज्ञातो व्यवहारः॥

संबहुलानि व्यवहारपदानि कतमानि। तान्येव निरुक्तिपदान्यप्युच्य[5]न्ते। प्रपञ्चपदान्यर्थसंग्रहपदानि चेति पर्यायाः। मातृकेवा[8]क्षराणामेतानि सर्वार्थसंग्रहाय वेदितव्यानि। तानि पुनस्तद्यथा भूमीन्द्रियविषयधर्म[6] पुद्गलस्वभावविशेषाः[9] क्रियात्मपरभावाभावपृच्छाविसर्जनदानादानसम्यक्त्व-

---

1 For this Tib *dhanabalam* (nor. gyi. stobs) which may also mean *nidhibalam*. Apparently *sannidhi* here is *sat-nidhi*

2 Tib na. rgyal las. kyan na. rgyal. See Mahāvyutpatti, CIV 27 MS *mānābhimānah*.

3 Tib gan. śe na?    4 For this Tib *vaiśesikah* or strictly *viśesakarah* (bye brag. byed. pahi) This is also below

5 Acc to Tib. *ca* (dan) is to be added here

6 In Tib read mig. gis for mig gi.

7 So in MS.    8 In Tib. *iva* is omitted

9 Acc to Tib *svabhāva* and *viśesa* are two different things (no bo ñid dan bye. brag rnams. dan).

१४ ख, Tib. 26a .5

मिथ्यात्वानि अनुज्ञाप्रतिषेधगुणदोषलाभा [7] लाभयशोऽयशःसुखदुःखनिन्दाप्रशंसासार[1]वरज्ञान [प्र?] मादालस्य[2] मात्रा[3]सहायसन्दर्शनसमादापन-[Tib. 27a 1] समुत्तेजनसंप्रहर्षणानि ॥

सप्त व्यपदेशपदानि। तानि पुनः सप्त विभक्तयः। पुरुषः पुरुषं पुरुषेणेत्यादयः ॥ प्रज्ञप्त्य [2] प्रज्ञप्ति[4]संज्ञप्ति[5]निध्यप्तिविज्ञप्तिस्थितिव्यवस्थाचय-[सञ्चय][6]निश्चयविनियोग[7]विस्मयादि[8]मध्यपर्यवसानानि कुशल[9] [3]-संज्ञा [प्रतिज्ञा] [10]व्यवहारानुष्ठानपरिभोगपर्येषणरक्षणलज्जा[11]नु[12] कम्पाक्षान्ति-भयप्रतिसंख्यानानि। मातापितृपुत्रदारा[13]द्यः सर्वे[14]परि [4] ग्रह-परिष्कारा वक्तव्याः। जातिर्जरा यावदिच्छाविघातः शोकः परिदेवो यौवनमारोग्यं जीवित[15] प्रियसम्प्रयोगोऽप्रियविनाभाव इच्छासम्पत्ति-[16] [5] विपत्तिरभिक्रमः[17] प्रतिक्रम आलोकितव्यवलोकित[18]समिञ्जितप्रसा-

---

1 Tib sñin po, MS *nisāra-*

2 Tib źum. pa dan/sgyid lug pa. dan / MS *mādalaya* (sic) źum pa may be taken in the sense of Skt *avasāda*, and sgyid lug pa in that of *ālasya*, yet, the meaning is not clear,

3 Tib lit *tanmātra* (de. tsam dan)

4 Tib gdags pa. med pa MS *-ptyājñapti*

5 Tib brda. sprad pa We have brda sprod. pa for *vaiyākarana.*

6 Tib bsags pa

7 The Xylograph is here indistinct, hence could not be verified

8 For *ādi-* Tib reads here thag. ma. Cf ma. thag pa *anantara.*

9 Tib. reads *kula-* (rigs. kyi) 10 Tib dam bcah ba

11 Tib. *āraksana* (kun nas. bsrun ba)

12 In Tib read hdsem pa for hjim pa. 13 Tib omits *dāra.*

14 Omitted in Tib

15 In the Tib. text read gson for gsan

16 In Tib it is one word for *sampattiḥ* Tib hbyor. ba, MS *sambhavanti*

17 Tib. snon du hon ba lit '*pūrva-āgamana*', MS *atikramah*

18 For *ālokita,* acc. to Tib mdun du. blta. ba means 'to see in the front,' while *vyavalokita,* Tib. gyas gyos. su blta. ba, means 'to 'see (from the left) to the right side (?)'

१५ क, Tib. 26b 6

रितगतस्थितनिषण्णशयितजागृतभाषिततुष्णीम्भावनिद्राक्लम[1]प्रतिविनोदनानि[2]। अशितपीतखादित[१५ख]स्वादिताभ्यासानभ्यास[3]प्रमादाप्रमादाः। समासव्यासहानिवृद्धिवितर्कविचार[6]क्लेशोपक्लेशप्रपञ्चनिष्प्रपञ्चा अवलदुर्बल[4]साध्यसाधनप्रवृत्तिनियम[5]योगजव[6]क्रमकाल[Tib 27b 1]देशसंख्यासामग्र्यसामग्रीसादृश्यासादृश्यानि। संसृष्टसाधारणप्रत्यक्षपरोक्षच्छन्नप्रकाशाः। कार्यकारणविनयलोकथालोप[2]करणसत्यमृषाहिताहित[7] ·आशङ्काकौतुकानि। शारद्यवैशारद्यव्यक्ताव्यक्तवधबन्धनावरोधनच्छेदनप्रवासनानि। [3] आक्रोशनरोषणताडनतर्जनपरिभाषणदहनक्लेदनशोषणपवन[8]मर्दन[9]कालुष्याप्तागमानुमानानि॥

तदेतपञ्चाकारं वस्तु[10][4]स्वभावादिकं कर्मपर्यवसानं त्रिभिः स्थानैः संगृहीतं वेदितव्यं। रूपसमुदायेन चित्तचैतसिककलापेनासंस्कृतेन च। तदन्या[11]-न्प्रज्ञप्तिमनो[12]धर्मान्स्थापयित्वा। तत्र[5] रूपसमुदाये तावत्सर्वधर्माः स्वबीजेभ्य उत्पद्यन्ते। तत्कथं। महाभूतान्युपादाय रूपं जायत इत्युच्यते। कथं च तेषु निश्रितमुपादायरूपं भवति। तेषु प्रतिष्ठितं तैरुपस्तब्धं तै[6]श्चानुबृंहितमिति। तथा हि। सर्वेषामाध्यात्मिकबाह्यानां भूतानामुपादायरूपाणां चाध्यात्मं चित्तसन्ततौ बीजानि सन्निविष्टानि। तत्र तावदुपादायरूपबीजमुपादाय रूपं जनयति.[7] यावद्भूतबीजेन भूतान्यजनितानि भवन्ति। भूतेषु पुन-

---

1 Omitted in Tib It is nal in Tib

2 Tib sñam pa bsan ba rnams

3 In Tib read ma goms for ma gams

4 MS *daurbalya*, Tib ñams. stabs. dan/ñam chun ba dan Sometimes ñams stobs simply means *bala* 'strength,' it may also mean *balavipanna* or *vipannabala*, i.e *abala*, *durbala*.

5 Tib *pratiniyama* (so sor. nes. pa) 6 MS *javā*

7 Here one word in MS is obscure Tib reads here gnas. pa meaning *niśraya*, *sthiti* etc MS has *pa* (?) *jya*(?) For *kautukāni* MS *kautukāh*,

8 Tib. btso. ba in the sense of purification Air is called *pavana* (√*pū*) as 'purifier'.

9 Tib dril. ba 10 Omitted in Tib. 11 MS *tadanyām*

12 In Tib read here yid for yod

१५ क, Tib. 27a. 5

जातेषु तदुपादायरूपं स्वबीजादेवोत्पद्यमानं तदुपादाय जातमित्युच्यते तज्जातिपूर्वङ्गमत्वात्। एवं भूतान्यस्य [Tib. 28a. 1] जनकानि भवन्ति।

कथं तन्निश्रितमुपादायरूपं भवति। तथा हि। उत्पन्नमुपादायरूपं भूतदेशाविनिर्भागेण प्रवर्तते। कथं तत्प्रतिष्ठितं भवति। महाभूतानु[2]ग्रहोपघातैकयोगक्षेमत्वात्। कथं तदुपस्तब्धं भवति। तन्मात्राविप्रणाशतया। कथमनुबृंहितं भवति। आहारमागम्य स्वप्नं वा ब्रह्मचर्यवासं वा [3] समाधिं वा तदाश्रितं भूयोभाववृद्धिवैपुल्यतां गच्छति। तत्तदनुबृंहितमित्युच्यते। इदं चोपादायरूपे महाभूतानां पञ्चाकारं कारित्वं वेदितव्यं॥

न च रूपसमुदाये [4] कदाचित्परमाणुरुत्पद्यते। उत्पद्यमानस्तु स्वबीजात् समुदाय एवोत्पद्यतेऽणुर्वा मध्यो वा महान्वा। न च पुनः परमाणुभिः समुदायश्चीयते[1]। बुद्ध्या तु परिमाणपर्यन्तपरिच्छेदतः [5] परमाणुः [१६क.] प्रज्ञप्यते[2]। तत्र समुदायोऽपि सप्रदेशः। परमाणुरपि सप्रदेशः। समुदायस्तु सावयवो न परमाणुः। तत्कस्य हेतोः। परमाणुरेव ह्यवयवः। [6] स च समुदायस्यैवास्ति न परमाणोः। पुनरन्ये परमाणवः। तस्मान्न सावयवः परमाणुः॥

द्विविधश्चाविनिर्भागः। एकदेशाविनिर्भागः। तद्यथा भूतपरमाणौ रूपशब्दगन्धरस [7] स्प्रष्टव्यानामनिन्द्रिय इन्द्रियवर्ज्यानां सेन्द्रिये सेन्द्रियाणामेकदेशाविनिर्भागः। मिश्रीभावाविनिर्भागः पुनरेकदेशत्वात्[3]। तद्यथा। [Tib.28b 1] तस्मादेव भूतपरमाणोस्तदन्यस्य समुदायस्य भूतभौतिकस्य। तस्य पुनः कृत्स्नस्य रूपसमुदायस्य[4] विविधद्रव्यशिलानिष्पिष्टाप्समायुक्तवन्मिश्रीभावाविनिर्भागो [2] द्रष्टव्यो नो तु तिलमुद्गमापकुलत्थ[5]राशिवत्। सर्वं चोपादायरूपं महाभूतदेशाश्रितमेव न महाभूतदेश[3]मतिरिच्य वर्तते[6]।

---

1 So the MS Tib bskyed (though looks as bsgyed which has no sense), cf. of skyed pa 'to generate', meaning in Skt *janyate*

2 Tib. hdogs. par zad de  3 Tib *eka-* (gcig) for *sahita-*.

4 In Tib read hdus for hdud

5 MS *kolatthā-* Before *kulattha-* Tib adds *kuvala-* (or *badara*) 'plums' rgya śug gi. hbru

6 In Tib *mi* for *ni* before gnas, te

१५ ख, Tib. 27b. 7

यावन्महाभूतेन देशो[1]ऽवष्टब्धस्तावानुपादायरूपेण। अतोऽपि महाभूताश्रितमुपादायरूपमित्युच्यते। अत एव च महाभूतानां महाभूत[4]मिति संज्ञा[2]। महत्वेन भूतत्वान्महाभूतं॥

तान्येतानि रूपसमुदाये समासतश्चतुर्दश द्रव्याणि भवन्ति। तद्यथा पृथिव्यापस्तेजो वातो रूपशब्दगन्धरसस्प्रष्टव्यानि चक्षु[5]रादीनि च रूपाणि पञ्चेन्द्रियाणि स्थापयित्वा मनोगोचरमेव रूपं। तत्र[3] रूपसमुदायो रूपीन्द्रियसंगृहीतः सर्वो यथानिर्दिष्ट[4]द्रव्यधातुकः। [6[ यथा रूपीन्द्रियसंगृहीत एवं रूपीन्द्रियाश्रयमहाभूतसंगृहीतः। तदन्यस्तु समुदायो रूपीन्द्रियाणि स्थापयित्वा तदन्यधातुकः॥

तत्र लक्षणसंग्रहेण [7] चतुर्दशैतानि द्रव्याणि भवन्ति। लक्षणसंग्रहमेव चोपादाय द्रव्यपरमाणुप्रज्ञप्तिः। धातुसंग्रहेण पुनर्यः समुदायो यावद्धातुकः[5] स तावद्भिर्द्रव्यैः संगृहीतो वक्तव्यः॥ अविनिर्भागसंग्रहः [Tib 29a. 1] पुनर्यावन्तो धर्मा लक्षणतो यस्मिन् समुदाय उपलभ्यन्ते तावद्भिर्द्रव्यैस्तस्य समुदायस्य संग्रहो वेदितव्य आध्यात्मिके वा बाह्ये वा समुदाये। तथा हि। क्वचित्समुदाय एकमेव भूतमुपलभ्यते। तद्यथा पाषाण[6] [2]मुक्तावैदूर्यशङ्खप्रवाडादिषु उत्ससरस्तडागनदीप्रस्रवणादिषु अर्चिःप्रदीपोल्कादिषु पूर्वदक्षिणपश्चिमोत्तरवायु[3]मण्डलसरजस्कारजस्कवाय्वादिषु च। क्वचिद्द्वयमुपलभ्यते। तद्यथा हिमार्द्रवृक्ष[7]पर्णपुष्पफलादिषु तप्तेषु[8] वा [4] पुनर्मण्यादिषु। क्वचित्त्रयमुपलभ्यते। तद्यथा। तप्तेषु[8] तेष्वेव वृक्षादिषु समीरितेषु

1 Tib ḥbyuṅ ba. chen po rnams kyis phyogs MS *bhuto-ddeśo*

2 Tib puts it slightly in a different way omitting *saṃjñā*. deḥi ñid kyi. phyir. ḥbyuṅ. ba chen po rnams. ni. ḥbyuṅ ba chen. po, śes. bya ste

3 MS adds here *sattvo* 4 Tib. adds-*sarva*- (thams cad)

5 MS *yad* for Tib. *yāvad* (ji sñed)

6 Tib adds *maṇi* (nor. bu. dan).

7 Acc. to Tib. the compound is *hima* and *ārdravṛkṣa* (chab. brom. dan/śiṅ rlon dan)

8 Tib lit *dagdheṣu* (bsregs pa). MS *taptaiva* So in the following

वा पुनः। क्वचिच्चतुष्टय[1]मुपलभ्यते। तद्यथा। आध्यात्मिकेषु रूपसमुदायेषु। [१६ ख] यथोक्तं भगवता [5] यदध्यात्मं प्रत्यात्मं केशादयः पुरीषपर्यवसानाः अयमाध्यात्मिकः पृथवीधातुः। प्रस्रावादिरब्धातु[2]। येनायं कल्प[3]आतप्यते सन्तप्यते यस्य चोत्सदत्वा[4]ज्ज्वरित[5]इति [6] संख्या गच्छति स तेजोधातुः। ऊर्ध्वगमादयो वा (?)[6]यतो वायुधातुरिति॥

[एवं][7]यद्यत्रोपलभ्यते तत्तल्लक्षणेन[8] विद्यते। यन्नोपलभ्यते तन्नास्ति। शब्दः सर्वस्मिन्रूपसमुदाये [7] धातुतः। लक्षणतः पुनः क्वचित्प्रत्युत्पन्न[9]-प्रयोगो(?) जनितत्वात्। वायुरपि द्विविधः स्थावरसन्ततिरस्थावरसन्तति[श्च]।[10] [तत्र स्थावरसन्तति][11] र्यस्तेषु तेषु समुदायेषु यन्त्रवाही[12]। [Tib 29b. 1]अस्थावरसन्ततिः पुनर्मण्डलचरोऽन्तरिक्षचरश्च॥ तत्रान्धकाररूपमालोकरूपं[13]चाकाशधातुरित्युच्यते। तत्पुनरन्धकाररूपं स्थावरं लोकान्तरिकासु।[14] अस्थावरमन्यत्र। [2] एवमालोकरूपं स्थावरं[15] स्वयम्प्रभेषु [16]देवेषु। अस्थावरमन्यत्र। स चालोकोऽन्धकारश्च वर्णाधिकसमुदायो द्रष्टव्यः। चित्त[17]सन्निविष्टस्य च रूपसमुदायबीजस्य सामर्थ्या-

---

1 Tib bži char meaning 'one fourth' or 'a quarter' (*pāda*)

2 Tib. gcin. la, sogs pa ni chuhi khams. so, MS *prasi āvādayo dhātuh*  3 Tib *deha*(lus)  4 Acc to Tib. it means *utkatatvāt* or *bhūyastvāt* 'owing to excessiveness' (śas che bas)

5 MS repeats it  6 So the MS. not supported by Tib reading rlun byin du rgyu ba la sogs. pa. ni which is not quite clear

7 Tib de ltar. na.  8 Tib. de, ni dehi mtshan ñid kyis, MS *tallaksano*,  9 Tib dmigs pa, *ālambana*

10 Tib dan  11 Tib de la rgyud brtan pa ni

12 Tib *yantracarah* (hkhor gyis rgyu. ba).

13 Tib adds here something more reading khod which is not quite legible

14 Mahāvyutpatti, CLV 17

15 In Tib reads brtan for bstan

16 AK, III 205.  17 In Tib read sems for sams.

१६ क, Tib. 29a. 4

दुभय[3]मप्रत्ययसान्निध्ये (?)[1] कदाचिदणुकस्य समुदायस्यानन्तर*[2] महतः समुदायस्य प्रादुर्भावो भवति। कदाचित्पुनर्महतो[3]ऽनन्तरमणुकस्य। येन ह्रासवृद्धी[1] समुदायानां प्रज्ञायेते ॥

[4]खक्खटत्वं कतमत्। पृथिवी। खरगतं कतमत्। यत्तद्बीजं। पुनः खक्खटं स एव धातुः। खरगतं केशादि लोष्टादि वा ॥ उपगतं कतमत्। यदुपात्तमाध्यात्मिकं ॥ अनुपागतं कतमत्। यदनुपात्तबाह्यं ॥ [5]पुनश्चित्तचैतसैर्बीजमुपगतं लक्षणमुपात्तं। एतद्विपर्ययादनुपगतमनुपात्तं। पुनरुपगत [मुपात्तं][5]मात्मन उपगमनात्। उपात्तं पूर्ववत्। एवमब्धात्वा[6]-[6]दयो यथायोगं द्रष्टव्याः ॥

तत्र सर्वस्मिन् रूपसमुदाये सर्वेषां महाभूतानां[7] धातुर्विद्यते सर्वकालं। तद्यथा[8] दृश्यते शुष्कात्काष्ठादभिमथ्यमानादग्निर्जायते। तथा पाषाण- ··· अग्निर्जायते][9] तथा लोह[7]रूप्यसुवर्णादीनां प्रगाढाग्निसम्प्रतप्तानां द्रवतोत्पद्यते। तथा चन्द्रकान्तादपामेव[10]मृद्धिमतश्चित्ताधिमोक्षवशाच्च पृथिव्यादीनां सुवर्णादीनां च प्रादुर्भावो भवति[11] ॥

तस्य खलु पुनः रूपसमुदायस्य[Tib. 30a 1] त्रिभिः स्रोतोभिः प्रवृत्तिर्भवत्यौपचयिकेन नैष्यन्दिकेन विपाकजेन च। तत्रौपचयिकं द्विविधं देशव्यातौ-

1 Tib mthu dan de dan. hdra bahi. rkyen yod pa. las suggesting *sāmarthyāt tādṛśapratyayasadbhāvāc ca.*

2 MS *avāntaram.* Tib mjug thogs su It occurs also below

3 Tib adds here *samudāyasya* (hdus. pa).

4 MS singular number, so the following verb

5 Tib. yan zin pa ni zin par gyur pa ste

6 Tib chuhi. khams. la. sogs pa la yan. de. bžin, MS *evam adhvā(?)dayo*

7 Tib omits *sarveṣām mahābhūtānām*

8 MS adds here *dṛśyate* not supported by Tib

9 Tib rdo. binabs las (?) me hgyur ba dan MS *tathā hi (hatādravalān?)*

10 Tib de bžin. du, MS *sarvo* (?).

11 Tib *dṛśyate* (snan. no)

पचयिकं लक्षण [2]पुष्टौपचयिकं च[1]। नैष्यन्दिकं [चतुर्विधं][2]। उपचयनैष्यन्दिकं विपाकनैष्यन्दिकं विकारनैष्यन्दिकं प्रकृतिनैष्यन्दिकं च। विपाकजं [3] [द्विविधं][3] विपाकत्वेन च जातं विपाकजं। विपाकाच्च जातं विपाकजं॥

स च रूपसमुदायोऽभिसमस्य षट् स्थानानि निश्रित्य प्रवर्तते। प्रतिष्ठास्थानं निलय[4]स्थानमुपकरणस्थानमिन्द्रियाधिष्ठानस्थानमिन्द्रियस्थानं समाधिगोचरस्थानं॥

तत्र चित्तचैतसकलापे चित्तं चोपलभ्यते चैतसाश्च त्रिपञ्चाशदु[4]पलभ्यन्ते। [5] तद्यथा मनस्कारादयो वितर्कविचारपर्यवसाना यथानिर्दिष्टाः।

एषां चैतसानां धर्माणां कति सर्वत्र चित्त[5] उत्पद्यन्ते सर्वभूमिके सर्वदा सर्वे च। आह। [6] पञ्च मनस्काराद्याश्चेतनापर्यवसानाः। कति सर्वत्रोत्पद्यन्ते सर्वभूमिके न च सर्वदा न सर्वे। पञ्चैव श्रद्धादयः प्रज्ञावसानाः। कति कुशल एव न सर्वत्र। [7] अपि तु [१७ क] सर्वभूमिके न सर्वदा न सर्वे॥ श्रद्धादयोऽहिंसापर्यवसानाः। कति क्लिष्ट एव न सर्वत्र न सर्वभूमिके [Tib 30b. 1] न सर्वदा न सर्वे। रागादयः संप्रजन्यपर्यवसानाः॥ कति सर्वत्र नैव तु सर्वभूमिके न सर्वदा न सर्वे। कौकृत्यादयो [2] विचारपर्यवसानाः॥

तत्रेन्द्रियमपरिभिन्नं भवति। विषय आभासगतो भवति। ततस्तज्जे मनस्कारे प्रत्युपस्थिते विज्ञानस्योत्पादो भवति॥ कथमिन्द्रियमपरिभिन्नं भवति। [3] द्वाभ्यां कारणाभ्यां। अविनाशतो[6] ऽमन्दीभावतश्च[7]॥

कथं विषय आभासगतो भवति। तद्यथा। अधिष्ठानतो वा स्वभावतो

---

1 For *-pusta- (?)* Tib rtas. par. byed. pahi which is not clear to me.

2 Tib. rnam pa bži ste. After this MS adds [*au*] *pacayikam*

3 Tib. rnam. pa gñis te Before this MS has *naisyandikam*

4 Tib *ekapañcāśat* (lna bcu. rtsa gcig po)

5 Tib. *sarvatra sattve* (sems. can thams cad. du)

6 Tib sa. run bar ma. gyur. pa (?)

7 In Tib read bžin for bžan.

वा[1] देशतो वा कालतो वा व्यक्ताव्यक्ततो वा सकलवस्त्वेकदेशतो[4] वा। स चेच्चतुर्भिरावरणैरनावृतो भवति। न च विप्रकृष्टः[2]। अवच्छादनीयेनावरणेन अन्तर्धापनीयेन अभिभवनीयेन संमोहनीयेन च द्वाभ्यां विप्रकर्षाभ्यां देशविप्रकर्षतोऽपचयविप्रकर्षतश्च ॥

[5] कथं तज्जस्य मनस्कारस्य प्रादुर्भावो भवति। चतुर्भिः कारणैः। छन्दबलेन स्मृतिबलेन विषयबलेनाभ्यासबलेन च ॥ कथं छन्दबलेन। यत्रानु- [6] नयो भवति चेतसस्तत्राभोगो बहुतरमुत्पद्यते। कथं स्मृतिबलेन। यत्र .. [3]तरं निमित्तं भवति। सुष्ठुतरं च चित्रीकृतं भवति।[4] तत्राभोगो बहुतर उत्पद्यते ॥ कथं विषयबलेन। यत्र विषय औदारिकतरो [7] वा मनापतरो वा प्रत्युपस्थितो भवति तत्राभोगो बहुतर उत्पद्यते ॥ कथमभ्यासबलेन। यत्संस्तुततरं भवति परिचिततरं तत्राभोगो बहुतर उत्पद्यते। अन्यथा त्वेकस्मिन्नालम्बन [Tib. 31a 1] एकप्रकारस्यैव मनस्कारस्य नित्यकालमुत्पत्तिः स्यात्। न चास्ति पञ्चानां विज्ञानकायानां सह[5] द्वयोः क्षणयोरुत्पत्तिः नाप्यन्योन्यसमनन्तरमन्योन्योत्पत्तिः। एकक्षणोत्पन्नानां [2][6] पञ्चानां कायविज्ञानानामनन्तरं मनोविज्ञानमवश्यमुत्पद्यते। तदनन्तरं कदाचिद्विक्षिप्यते। ततः श्रोत्र[7]विज्ञानं वान्यतमान्यतमद्वा [3] पञ्चानां विज्ञानकायानां। स चेन्न विक्षिप्यते। ततो मनोविज्ञानमेव निश्चितं नाम। ताभ्यां च निश्चितपर्येषकाभ्यां मनोविज्ञानाभ्यां स विषयो[8] विकल्प्यते ॥

---

1 In Tib. read rten nam for rtan tam

2 Evidently one should read *na ca viprakṛṣṭaḥ* just before *dvābhyām* which follows.

3 Both MS and Tib illegible.

4 Tib. adds *cetasaḥ* (sems). So below.

5 Tib lhan. cig tu; MS *san(?)sahita-*

6 Tib adds *teṣām* (de. dag)

7 Omitted in Tib.

8 Omitted in Tib

तत्र द्वाभ्यां कारणाभ्यां क्लिष्टस्य वा कुशलस्य[4] वा धर्मस्योत्पत्तिर्भवति। विकल्पतः पूर्वावेधतश्च। तत्र मनोविज्ञाने द्वाभ्यां कारणाभ्यां। पञ्चसु पुनर्विज्ञानकायेषु पूर्वावेधत एव। क्लिष्टकुशल[5]मनोविज्ञानावेधात्समनन्तरे चक्षुरादिविज्ञाने क्लिष्टकुशलधर्मोत्पत्तिर्न तु विकल्पात्। तेषामविकल्पात्। अत एव चक्षुरादीनि विज्ञानानि [6] मनोविज्ञानस्यानुवर्तकानीत्युच्यते॥

यदुच्यते एकचित्तं तदुत्तराणि [विज्ञानानि][1] चेति। कथमेकस्य चित्तस्य व्यवस्थानं भवति। व्यावहारिकेण चित्तक्षणेन नो तु प्रवृत्तिक्षणेन[2]। व्यवहारिक[3]मेकचित्तं कतमत्। [१७ख] एकेन पदसन्निश्रयेणैकस्मिन् वस्तुनि यावता कालेन विज्ञप्तिरुपद्यते तावदेकचित्तं। यच्चापि तत्समानप्रवाहं तदप्येकमेवोच्यते। विसदृशं तु [Tib. 31b 1] तस्माद्द्वितीयमिति॥

तत्र मनोविज्ञानेऽनाभोगविक्षिप्तेऽसंस्तुतालम्बने नास्ति छन्दादीनां प्रवृत्तिः। तच्च मनोविज्ञानमौपनिपातिकं वक्तव्यमतीता[2]लम्बनमेव। पञ्चानां विज्ञानकायानां समनन्तरोत्पन्नं मनःपर्येषकं निश्चितं वा वर्तमानविषयमेव वक्तव्यं। तच्चेत्तद्विषयालम्बनमेव तद्भवति॥

तत्र सकलं वस्तुलक्षणं विज्ञानेन विज्ञापयति।[4] [3] तदेवाविज्ञप्तं विज्ञेयलक्षणमित्युच्यते। यन्मनस्कारेण विज्ञापयति। तत्रैव शुभाशुभोभयविपरीतलक्षणं यत् [तत्][5]स्पर्शेन प्रतिपद्यते। [4] तत्रैवानुग्रहोपघातोभयविपरीतलक्षणं यत् [तद्][6] वेदनया[7] प्रतिपद्यते। तत्रैव व्यवहारनिमित्तलक्षणं यत्सं[8]ज्ञया प्रतिपद्यते। तत्रैव सम्यङ्मिथ्योभय[5]विपरीतप्रतिपत्तिलक्षणं [यत्][9] तच्चेतनया प्रतिपद्यते। तस्मादेते मनस्काराद्यश्चेतनापर्यवसानाश्चैतसाः सर्वत्र सर्वभूमिके सर्वदा सर्वे[6]चोत्पद्यन्ते॥

---

1 Tib. rnam par

2 Tib skad cig gis. MS *lakṣanena* for *kṣaṇena* Before this Tib has gźag.

3 MS *vyāvahārikena* (?) with the preceding sentence.

4 Read *vijñāpyate* (?) So in the next sentence

5 Tib de ni So below

6 Tib de ni.

7 MS *vedanā*

8 Here *tat* may be read.

9 Tib. gan. yin. pa

१७क, Tib. 31a. 3

मनस्कारः कतमः। चेतस आभोगः॥ स्पर्शः कतमः। त्रिकसन्निपातः॥ वेदना कतमा। अनुभवना॥ संज्ञा कतमा। सञ्जानना॥ चेतना कतमा। चित्ताभिसंस्कारः॥ छन्दः कतमः। यदी[1]प्सिते वस्तुनि [7] तत्र तत्र तदनुगा कर्तुकामता॥ अधिमोक्षः कतमः। यन्निश्चिते वस्तुनि तत्र तत्र तदनुगावधारणशक्तिः[2]॥ स्मृतिः कतमा। यत्संस्तुते वस्तुनि तत्र तत्र तदनुगाभिलपना॥ [Tib 32a 1] समाधिः कतमः। यत्परीक्ष्ये[3] वस्तुनि [तत्र तत्र][4] तदनुगमुपनिध्यानसंनिश्रित[5] चित्तैकाग्रं॥ प्रज्ञा कतमा। यत्परीक्ष्य एव वस्तुनि तत्र तत्र तदनुगो धर्माणा प्र[2]विचयो योगविहिततो वायोगविहिततो वा नैव योगविहिततो नायोगविहिततः[6]॥

तत्र मनस्कारः किंकर्मकः। चित्ता]3] वर्ज[न][7]कर्मकः। स्पर्शः किंकर्मकः। वेदनासंज्ञाचेतनानां संनिश्रयदानकर्मकः॥ वेदना किंकर्मिका। तृष्णोत्पादोपेक्षा[8]कर्मिका॥ संज्ञा किंकर्मिका। आलम्बने चित्त[4] चित्रीकार(?)[9]व्यवहारकर्मिका॥ चेतना किंकर्मिका। वितर्ककायवाक्कर्मादिसमुत्थानकर्मिका॥ छन्दः किंकर्मकः। वीर्यारम्भसंजननकर्मकः॥ अधिमोक्षः किंकर्मकः। गुणतो दोषतो[5] नोभयतो वालम्बनधृति[10]कर्मकः॥ स्मृतिः किंकर्मिका। चिरचिन्तितकृतभाषितस्मरणानुस्मरण-

---

1 Here and in the following sentences the gender is not strictly correct

2 For-*śaktiḥ* supported by Tib nus pa MS *bhaktiḥ*

3 MS *parīkṣya.*

4 Tib de dan de. la

5 For *upa° śritam* Tib has nes pai. sems pa. la. brten. nas which is not very clear.

6 Here for *yogavihita* Tib. lit has *yukti*-(or *nyāya*-) *janita* (rigs pa. bskyed. pa) In the last sentence in Tib. read rigs. pa for rig. pa.

7 Tib. sems. gton. bahi

8 Tib. adds hjog. pa

9 For-*citrīkāra* Tib has mtshan mar hdzin pahi meaning *lakṣaṇadhāraṇa* (?)

10 Acc to Tib. here *dhṛti* means *ānanda* (dgah. ba).

१७ ख, Tib. 31b. 6

कर्मिका ॥ समाधिः किंकर्मकः । ज्ञानसंनिश्रयदानकर्मकः ॥ [6] प्रज्ञा किंकर्मिका । प्रपञ्च[1]प्रचारसंक्लेशव्यवदानानुकूलसन्तीरणकर्मिका ॥

तत्र कथं त्रयाणामध्वनां व्यवस्थानं भवति । बीजानां तावद्धर्माव्यतिरेकत्वात्तद्धर्मव्यवस्थानवत्तद्व्यवस्थानं [१८क] दत्तादत्तफलतया । [7]फलानां पुनर्यन्निरुद्धलक्षणं तदतीतं । सति हेतावनुत्पन्नलक्षणमनागतं । उत्पन्नानिरुद्धलक्षणं प्रत्युत्पन्नं ॥

कथं जात्या [Tib. 32b 1]- जरायाः स्थितेरनित्यतायाश्च व्यवस्थानं भवति । सर्वत्र विज्ञानसन्ताने सर्वो बीजसन्तानः सहचरो[2] व्यवस्थाप्यते सति [प्रत्यये ।][3] प्रत्ययवशात्तत्प्रथमतः सन्तत्यानुत्पन्नपूर्वो[4] यो धर्म उत्पद्यते सा [2] जातिः संस्कृतलक्षणमित्युच्यते ॥ तस्यैवान्यथात्वं जरा । तत्पुनर्द्विविधमन्यत्वान्यथात्वमन्यथाभावान्यथात्वं च । [तत्र][5] सदृशोत्पत्तौ सत्यामन्यत्वान्यथात्वं । विसदृशोत्पत्तौ [3] सत्यामन्यथाभावान्यथात्वं ॥ जातमात्रस्य जातिमात्रक्षणानुवृत्तिः स्थितिः । जातिक्षणोर्ध्वं[6] क्षणानव[7]स्थानमनित्यता ॥ तान्येतानि तस्यैव धर्मस्यावस्थाभेदेन चत्वारि लक्षणानि भवन्ति ॥

चत्वारः प्रत्ययाः । हेतुप्रत्ययः [4][8] समनन्तरप्रत्यय आलम्बनप्रत्ययोऽधिपतिप्रत्ययः[9] । तत्र बीजं हेतुप्रत्ययः । समनन्तरप्रत्ययो यस्य विज्ञानस्यानन्तरं[10] येषां विज्ञानानामुत्पत्तिनियमः स तेषां समनन्तर[5]प्रत्ययः ।

---

1 MS has here *-t-* which may be for *tat* but not supported by Tib

2 Tib lhan. cig. rgyu bar MS *sahānyataro*

3 Tib rkyen yod la.

4 In Tib read snan for lna. na

5 Tib de la.

6 Tib. skye. bahi. skad. cig phan. chad, MS *lakṣanārdhvam*

7 Tib skad. cig, MS *lakṣanā°*.

8 Tib adds here mtshuns *sama*, 'redundantly'. So also below.

9 Madhyamakakārikā, I, 2
*catvārah pratyayā hetur ālambanam anantaram* ।
*tathaivādhipateyam ca pratyayo nāsti pañcamah* ॥

10 Tib mjug thogs. su. MS *°ntarah*

१७ख, Tib. 32a. 5

आलम्बनप्रत्ययो येषां चित्तचैतसिकानां धर्माणां यदालम्बनं। अधिपतिप्रत्ययो यो बीजनिर्मुक्त[1] आश्रयः। तद्यथा। चक्षुर्विज्ञानस्य चक्षु र्ये च तत्सहाय[6]धर्माः। एवमवशिष्टानां विज्ञानानां। या च कुशलाकुशलतेष्टानिष्टफलपरिग्रहाय। एवम्भागीया[2] अधिपतिप्रत्ययाः॥

तत्र बीजाद्धेतुप्रत्ययव्यवस्थानं। स्वभावा[7]त्समनन्तरप्रत्ययस्य[3] आलम्बनात्तस्यैव। आश्रयसहायादिभ्योऽधिपतिप्रत्ययस्य॥ यदुक्तं[4] ये हेतवो ये प्रत्यया विज्ञानस्योत्पा[दा]येति। [Tib. 33a 1] तत्रैषामेव चतुर्णामेको हेतुप्रत्ययः। हेतु[श्च] प्रत्ययश्च।[5] अवशिष्टाः प्रत्यया एव॥

यदुक्तं कुशलमकुशलमव्याकृतमिति[6] तेषां कः प्रभेदः। एकविधं कुशल[2]मनवद्यार्थेन। द्विविधमुपपत्ति[7]प्रातिलम्भिकं प्रायोगिकं च। त्रिविधं स्वभावतः [8]संप्रयोगतः[9] समुत्थानतश्च। चतुर्विधं पुण्यभागीयं मोक्षभागीयं निर्वेधभागीयं [3] [10]मनास्रवं[11] च। पञ्चविधं दानमयं शीलमयं भावनामयमिष्टफलं विसंयोगफलं च। षड्विधं कुशलं रूपं वेदना संज्ञा सं[4]स्कारो विज्ञानं प्रतिसंख्यानिरोधश्च। सप्तविधं स्मृत्युपस्थानसंगृहीतं सम्यक्प्रहाण[12]ऋद्धिपादेन्द्रियबलबोध्यङ्गमार्गाङ्गसंगृहीतं। [5]

---

1 Tib sa. bon ma. gtogs pahi. MS *bījānimukta*

2 The plural number is supported also by Tib (rnams) Accordingly one should read °*pratyayāḥ* for *pratyayaḥ* which follows in the MS.

3 Tib. adds *vyavasthānam* (gžag) in each case

4 Where and by whom?

5 Tib. rgyu. yan yin. la ikyen yan yin. no, MS *hetupratyaśca*.

6 In Abhidharma texts.

7 Here *upapatti*° is in the sense of *utpatti*°, Tib skyes.

8 Tib. *sasvabhāvataḥ* (?) reading no. bo ñid. dan. ldan pa

9 Omitted in Tib

10 Tib. adds here one more chad pa. hthun. pa. dan. The meaning is not clear.

11 MS °*śravanam*.

12 In fact it is *pradhāna*, Pali *pahāna* 'perseverance', Tib. has translated it here by spon ba the Pali word being taken as from √*hā* 'to abandon'.

१८ क, Tib. 32b 5]

अष्टविधमभिवादनवन्दनप्रत्युत्थानाञ्जलिकर्मसंगृहीतं सुभाषिते साधुकारदानभूत[1]वर्णाहरण(?)[2]संगृहीतं ग्लानोपस्थानसंगृहीतं [6] गुरूणां गौरवेणोपस्थानसंगृहीतमनुमोदनासंगृहीतं परसमादापना[१८ ख]संगृहीतं परिणामनासंगृहीतमप्रमाणभावनासंगृहीतं। नवविधं प्रयोगानन्तर्य[7]विमुक्तिमार्गविशेष[3]संगृहीतं मृदुमध्याधिमात्रलौकिकलोकोत्तरमार्गसंगृहीतं। दशविधमौपधिकं[4] निरौपधिकं श्रुत[Tib 33b. 1]मयं चिन्तामयं संवरसंगृहीतं नैवसंवरनासंवरसंगृहीतं मौलसामन्तक[5]संगृहीतं श्रावकयानसंगृहीतं प्रत्येकबुद्धयानसंगृहीतं [2] महायानसंगृहीतं। पुनर्दशविधं कामप्रतिसंयुक्तं प्रथमद्वितीयतृतीयचतुर्थध्यानप्रतिसंयुक्तमाकाशानन्त्यायतनविज्ञाना[नन्त्यायतना][6] किञ्चन्या[3]यतन-नैवसंज्ञानासंज्ञायतनप्रतिसंयुक्तमनास्रवसंगृहीतं च। पुनर्दशविधं दश कुशलाः कर्मपथाः। पुनर्दशविधमशैक्षी सम्यग्दृष्टिर्यावत्सम्यग्विमुक्तिः [4] सम्यग्ज्ञानं च। पुनर्दशविधमष्टासु पुण्योपपत्तिषु चक्रवर्ति[राज][7]संवर्तनीयमानिञ्ज्योपगं च कुशलमित्येवंभागीयः कुशलप्रभेदः॥

समासतस्तु [5] द्विविधः कुशलार्थं इष्टफलपरिग्रहार्थी वस्तुपरिज्ञाकौशल्यतत्फलार्थश्च।

कुशलधर्मप्रतिद्वन्द्वभूतमावरणभूतं च तेषामकुशलमनिष्टफलपरिग्रहत्वाद्वस्तुनोऽसम्यक्परिज्ञातत्वाच्च॥

[6] अव्याकृतं पुनश्चतुर्विधं। विपाकजं तदेकत्यमैर्यापथिकं[8] शैल्पस्थितिकं नैर्माणिकं च। [7]यत्किञ्चिच्छिल्पं रतिक्रीडार्थं करोति न जीविकार्थं न कर्मसंज्ञया न प्रतिसंख्याय तच्छैल्पस्थितिकं क्लिष्टं [Tib 34a.1] अव्याकृतमन्यत्। यथा शैल्पस्थानिकमेवमैर्यापथिकं नैर्माणिकं कुशलमव्याकृतं च॥

1 Tib takes it in the sense of *satya* 'true' (bden pa).
2 Acc to Tib. *ākhyāna* (brjod. pai).
3 MS adds here *mārga* again. 4 Tib. rdzas las byun.
5 These two are particular *dhyānas* Mahāvyutpatti LXVII. 8 9.
6 Tib mlhah. yas. skye. mched 7 Tib. rgyal po.
8 MS °*tyā vā airyā*°

१८ क, Tib. 33a. 5

एकविधं चक्षू रूपाणां दर्शनाय। द्विविध[2]मौपचयिकं विपाकजं च। त्रिविधं मांसचक्षुर्दिव्यचक्षुः[1] प्रज्ञाचक्षुश्च। चतुर्विधं सनिमिषमनिमिषं[2] स्थावर[3]मस्थावरं च। तत्र स्थावरं रूपावचरं [3] पञ्चविधं पञ्चगतिसंगृहीतं। षड्विधं। स्वसन्तानपतितं परसन्तानपतितमभिरूपं[4] विरूपं समलं निर्मलं च। सप्तविधं [स]विज्ञानकमविज्ञानकं [4] सबलं दुर्बलं कुशलविज्ञानसंनिश्रय[5]मकुशलविज्ञानसंनिश्रयमव्याकृतविज्ञान[१९क ]-संनिश्रयं। अष्टविधमधिष्ठानचक्षुः [· ·· चक्षुः][6] कुशलकर्म[7]विपाक[5]-जमकुशलकर्मविपाकजमाहारोपचितं स्वप्नोपचितं ब्रह्मचर्योपचितं समापायुपचितं। नवविधं [6] प्रतिलब्धमप्रतिलब्धं प्रतिलब्धपूर्वमप्रतिलब्धपूर्वं प्रतिलब्धविहीनं प्रहातव्यमप्रहातव्यं प्रहीणमप्रहीणं। दशविधं नास्ति। एकादशविधमतीतमनागतं [7] प्रत्युत्पन्नमाध्यात्मिकं बाह्यमौदारिकं सूक्ष्मं हीनं प्रणीतं दूरेऽन्तिके ॥

एवं श्रोत्रादीनि यावत्कायस्त्रिविधः। चतुर्विधत्वे तु भेदः।[8] [Tib.34b.1] त्रिविधं श्रोत्रं मांसोपचि[तं][9] दिव्य[10]मवहितं च। चतुर्विधं स्थावरमस्थावरमुच्चैःश्रवमनुच्चैःश्रवं[11] च। त्रिविधं घ्राणं जिह्वा च। प्रभास्वरमभास्वरमुपहतं च। चतुर्विधं घ्राणं जिह्वा च [2]। स्थावरमस्थावरं सविज्ञानकमविज्ञानकं च। कायस्त्रिविधः। किट्टस्थाय्यकिट्टस्थायी[12] सर्वेलगश्च सर्वेन्द्रियानुगत्वात्। चतुर्विधः स्थावरो [3]ऽस्थावरः स्वयंप्रभोऽस्वयंप्रभश्च ॥

---

1 Omitted in Tib

2 In Tib for hdzums pa (*smita*) and mi hdzums pa (*asmita*) read btsums and mi. btsums respectively

3 In Tib. read brtan for bstan

4 Tib sdug. pa *iṣṭa, kānta* 'agreeable'.

5 Tib. śes. pahi. rten, MS °*na maniśraya*.

6 Tib. illegible bahi mig dan. 7 Tib las, MS °*dharma*°

8 So the MS. Tib very illegible, hence could not be compared. Should we read *strividhacaturvidhatvena bhedaḥ* ?

9 Tib śa. la grub.

10 Tib lhahi dan MS °*vad veditavya*°

11 Tib skad. bskyed. na thos pa. daṅ/ skod ma. bskyed par thos, paho, The meaning is, however, not clear.

12 Tib ro yod, pa dan. / ro. med pa. dan

एकविधं मनो धर्मविज्ञानार्थेन। द्विविधं प्रज्ञप्तिपतितमप्रज्ञप्तिपतितं च। [4] तत्र व्युत्पन्नव्यवहाराणां प्रथमं दहाणां पश्चिमं। अपरः पर्यायः। लौकिकं[1] लोकोत्तरं च। त्रिविधं चित्तं मनो विज्ञानं[2] [च]। चतुर्विधं कुशलमकुशलं [5] निवृताव्याकृत[मनिवृताव्याकृतं][3] च। पञ्चविधं पञ्चावस्थाभेदात्। हेत्ववस्थं फलावस्थं [सुखावस्थं][4] दुःखावस्थमदुःखा[6]सुखावस्थं [च]। षड्विधं षड्विज्ञानकायाः। सप्तविधं सप्तविज्ञानस्थितिषु। अष्टविधमधिवचनसंस्पर्शसम्प्रयुक्तं प्रतिघसंस्पर्शसम्प्रयुक्तं [7] गर्धाश्रितं नैष्क्रम्याश्रितं सामिषं निरामिषं लौकिकं लोकोत्तरं च। नवविधं नवसु सत्त्वावासेषु। दशविधं नास्ति। [Tib 35a 1] एकादशविधं पूर्ववत्। द्वादशविधं द्वादश चित्तानि। कामावचरं कुशलमकुशलं निवृताव्याकृतमनिवृताव्याकृतं च। रूपावचरं [2] त्रिविधमकुशलं स्थापयित्वा। एवमारूप्यावचरं। लोकोत्तरं शैक्षमशैक्षं च॥

एकविधं रूपं चक्षुर्गोचरार्थेन। द्विविधमाध्यात्मिकं बाह्यं च। [3] त्रिविधं वर्णः संस्थानं विज्ञप्तिश्च। चतुर्विधमाश्रयनिर्भासमनाश्रयनिर्भासं[5] सातासातनिर्भासं प्रचयावस्थितं च। पञ्चविधं पञ्चगति[4]भेदात्। षड्विधं प्रतिष्ठासंगृहीतं निलयसंगृहीतं [6]विषयसंगृहीतं सत्त्वसंख्यातमसत्त्वसंख्यातं सनिदर्शनसप्रतिघं[7] च। सप्तविधं [5]सप्तविधपरिग्रहभेदात्। अष्टविधमष्टसु [१९ ख 1] लोकचित्रेषु[8] तानि पुनर्भूमिभागचित्रं पर्वतचित्रमारामवनसरस्तडागादिचित्रं गृहविमान[6]-

---

1 Omitted in Tib.

2 MS *dharma vi°*, Tib does not add *dharma*

3 Tib. ma bsgribs la lun. du ma bstan. paho

4 Tib bde bahi. dus dan.

5 Tib. *svāśraya°* and *asvāśraya°* (rangi rten° ran gi. rten° ma. yin. pa°.

6 In Tib *pratiṣṭhā°* is after *nilaya°* Read gžir for bžir in Tib

7 As in Tib. reading bstan. du. yod. la thogs pa dan bcas paho. MS has *sanidarśanam sapra°*

8 Tib. sna. tshogs. MS *°citrikeṣu*

१९ क, Tib. 34b. 3

9

चित्रं कर्मस्थान[1]चित्रमालेख्यचित्रं कुट्टिमकर्म[2]चित्रं परिष्कारचित्रं च। नवविधमतीतमनागतं प्रत्युत्पन्नमौदारिकं वा सूक्ष्मं वा हीनं वा प्रणीतं वा [7] यद्वा दूरे यद्वान्तिके। दशविधं दश परिष्काराः॥

एकविधः शब्दः श्रोत्रगोचरार्थेन। द्विविधो व्यक्तार्थनिर्घोषोऽव्यक्तार्थनिर्घोषश्च। [Tib 35b 1] त्रिविध उपात्तमहाभूतहेतुकोऽनुपात्तमहाभूतहेतुकस्तदुभयमहाभूतहेतुकश्च। चतुर्विधः कुशलोऽकुशलो[3]निवृताव्याकृतोऽनिवृताव्या[2]कृतश्च। पञ्चविधः पञ्चगतिभेदात्। षड्विध उपदेश[4]स्वाध्यायशब्दं आपृच्छनपरिपृच्छना[5]शब्दो धर्मदेशनाशब्दः सांकथ्यविनिश्चयशब्दो[3]ऽन्योन्यवचनापवादा[6]पत्तिव्युत्थापनाशब्दः सङ्करकलकलाशब्दश्च। सप्तविधः स्त्रीशब्दः पुरुषशब्दो मृदुमध्याधिमात्रो मृगविहङ्गादिशब्दो[7] वातवनस्पतिशब्दश्च। [4]अष्टविधश्चत्वार आर्यव्यवहारशब्दाश्चत्वारोऽनार्यव्यवहारशब्दाश्च। अदृष्टे दृष्टवादिता[8] दृष्टे चादृष्टवादितानार्यव्यवहारः। अश्रुतेऽमते[5]ऽविज्ञाते[9]विज्ञातवादिता विज्ञाते चाविज्ञातवादितानार्यो व्यवहारः। दृष्टे दृष्टवादितादृष्टे चादृष्टवादितार्यो व्यवहारः। श्रुते मते[6]विज्ञाते विज्ञातवादिता अविज्ञाते चाविज्ञातवादितार्यो व्यवहारः। पुनरष्टौ कुशलाश्चत्वारो वाक्कर्मपथाश्चत्वारोऽकुशलाः। नवविधो[7]ऽतीतानागतप्रत्युत्पन्नो यावद्दूरे[10]ऽन्तिके च। दशविधः पञ्चाङ्गतूर्यसंगृहीतः। स पुनर्नृत्यस[ह]गतो गीतस[ह]गतो वादित्र[11]स[ह]गतः स्त्रीसहगतः पुरुषसहगतश्च। [Tib. 36a 1] शङ्खशब्दः पटहशब्दो भेरीशब्दो मृदङ्गशब्द आडम्बरशब्दश्च॥

गन्ध एकविधो घ्राणगोचरार्थेन। द्विविध आध्यात्मिको बाह्यश्च।

---

1 Tib. omits *-sthāna*.

2 Tib brdun sbyor?

3 MS *kuśalam lakuśala.*

4 Tib lun. nod. pa, MS *uddeśa*

5 So in MS.

6 Tib hdebs, MS *avavāda* which is not appropriate nor supported by Tib.

7 For °*vihangādi*° (Tib. bya. la sogs). MS °*śabdādi*°(?)

8 In Tib. read smra ba. for ma. ba

9 Tib bye. brag ma. phyed. pa (?)

10 MS *yā ca dūre*°.

11 MS *vādita*°.

त्रिविधो मानापिकोऽमानापिक [2] उपेक्षास्थानीयश्च। चतुर्विधश्चत्वारो महागन्धा अगरुगन्धस्तुरुष्क[1]गन्धः कर्पूरगन्धः कस्तूरिकागन्धश्च। पञ्चविधो मूलगन्धः सारगन्धः पत्रगन्धः पुष्पगन्धः [3] फलगन्धश्च। षड्विधो भोजनगन्धः पानगन्धो वस्त्रगन्धोऽलङ्कारगन्धो [यानगन्धः][2] प्रतिश्रयगन्धश्च। सप्तविधस्त्वग्गन्धः पत्रगन्धः सूक्ष्मैलागन्धश्चन्दनगन्धस्त्रिकटुगन्धो धूप[4]गन्धश्चूर्णगन्धश्च। अष्टविधः सहजोऽसहजः स्थावरोऽस्थावरः संयुक्तः [केवल][3] उत्कटोऽनुत्कटश्च।[4] नवविधोऽतीता[5]नागतप्रत्युत्पन्नो यावद्दूरेऽन्तिके च। दशविधः स्त्रीगन्धः पुरुषगन्ध उच्चारगन्धः प्रस्रावगन्धः खेटगन्धः शिङ्घाणगन्धो वसालसिकापूय[6]शोणितगन्धो [२०क] मांसगन्धः सङ्करगन्धः क्लेदकर्दमगन्धश्च॥

रस एकविधो जिह्वागोचरार्थेन। द्विविध आध्यात्मिको बाह्यश्च। त्रिविधो मनापामनापादिः पूर्ववत्। चतुर्विधो [7] यवरसः शालिरसो गोधूमरसोऽवरधान्यरसश्च। पञ्चविधो मद्यपानरसोऽमद्यपानरसः[5] शाकपत्ररसो[6] वनफलरसो[7] भोजनीयरसश्च। षड्विधस्तिक्तादिः। सप्त-[Tib. 36b 1]विधः सर्पिस्तैलमध्विक्षुविकाररसो गोरसो[8] लवणरसो मांसरसश्च। अष्टविधो गन्धवत्। नवविधो गन्धवदेव। दशविधः खाद्यरसो[9] भोजनरसः स्वाद्यरसः [2] पेयरसश्चूष्य[10]रसो विशेषणीयस्तर्पणीयः शमनीयः शोधनीयो निषेवणीयश्चौषधरसः॥

---

1 Tib. du ru k It is a kind of resin considered good for the sacrificial fire, as writes S Das in his dictionary

2 Tib. bžon pahi. dri dan

3 Tib. hbah. žig pa. dan.

4 Tib dri tsha ba. dan. dri. tsha. ba. ma yin. paho. MS *uthaconutkacaś ca*

5 Tib omits *-pāna* in *madya°* and *amadya°*.

6 Tib illegible

7 Tib nags tshal. gyi. śin tog. gi ro. dan, MS *navaphala°*.

8 Tib *madhuraraso* (mnar bahi. ro)

9 Tib bcah. bahi ro. (=*pānarasa* ?)

10 MS *puspar°*

१९ ख, Tib. 36a. 1

स्पर्शो[1] एकविधः कायगोचरार्थेन। द्विविधो गन्धवत्। [3] त्रिविधो मनापादिः। चतुर्विधः स्पर्शन[2]स्पर्शः पीडनस्पर्शोऽभिघातस्पर्शो मर्दनस्पर्शः। पञ्चविधः पञ्चगतिभेदात्[3]। पुनर्दशमशक[4]वातातपसरीसृपसंस्पर्शः। षड्विधः सुखो दुःखोऽदुःखासुखः सहजो विपक्षसंगृहीतः प्रतिपक्षसंगृहीतश्च।[4] सप्तविधः। [5] खक्खटो द्रव उष्ण[5] उल्लङ्घनपतनसंस्पर्शः परामर्श[6]संस्पर्शः कायविकारसंस्पर्शश्च। तद्यथा श्लक्ष्णादिः[7]। अष्टविधः पाणि[6]संस्पर्शो लोष्टसंस्पर्शो दण्डसंस्पर्शः शस्त्रसंस्पर्शः शीतसंस्पर्श उष्णसंस्पर्शो[8] जिघत्सासंस्पर्शः पिपासासंस्पर्शः। नव[7]विधो गन्धवत्। दशविधो भोजनसंस्पर्शः पान[9]संस्पर्शो[10] वस्त्रसंस्पर्शोऽलङ्कारसंस्पर्शो मञ्चपीठसंस्पर्शः[11] [Tib. 37a 1] कूर्चबिम्बोपधानसंस्पर्शः स्त्रीसंस्पर्शः पुरुषसंस्पर्शस्तयोः परिचर्यापरिभोगसंस्पर्शश्च॥

धर्मधातुः समासतः[2]सप्ताशीतिर्धर्माः सह प्रज्ञप्तिधर्मैः। ते पुनः कतमे। मनस्कारादयो वितर्कविचारपर्यवसानाश्चैतसास्त्रिपञ्चाशत्। धर्मायतनपर्यापन्नं। [3]संवरासंवरसंगृहीतं रूपं समाधिगोचरञ्च रूप प्राप्तिरसंज्ञा[12]समा-

---

1 Here and just before *pīḍana* for Skt *sparśa* Tib. has reg. bya or reg par bya Skt lit. *spraṣṭavya*, and not reg pa, Skt *sparśa*, as we have generally.

2 MS *spṛśana*° 3 In Tib. read bye brag for bye. gag

4 What is the difference between these last two terms? Tib. does not help giving the same reading (mi mthun pahi phyogs su. bsdus pa. dan / gñen nor. bsdus paho, ॥)

5 MS *uṣṇaś ca u*°. Tib. adds here *calana* (gyo. ba dan) making thereby the number eight instead of seven.

6 Tib. gyug. nom gyi. (?)

7 Tib. hjum pa la sogs pa rnams. paho. MS *śūktodi*.

8 In Tib. it is the last.

9 Tib. lit. *pipāsā*° (skom. pahi.)

10 Tib. adds here *vāhanasaṃsparśaḥ* (bžon. pahi hdugs. te reg. pa dan)

11 MS *vrdhasi*°(?) Tib. also is not clear. tshans. can. dan. It is indistinct here.

12 For *āsaṃjñika*- or *āsaṃjñi-samāpatti* Tib. hdu. śes. med pahi sñoms. par. hjug. pa

२० क, Tib. 36b. 2

पत्तिर्निरोधसमापत्तिरासंज्ञिकं[1] जीवितेन्द्रियं [4] निकायसभागः पृथग्जनत्वं जातिर्जरा स्थितिरनित्यता नामकायाः पदकाया व्यञ्जनकायाः प्रवृत्तिः प्रतिनियमो योगो जवो[5]ऽनुक्रमः कालो देशः संख्या सामग्रसामग्री च। अष्टावसंस्कृतवस्तूनि आकाशमप्रतिसंख्यानि[ २०ख ]-रोधः प्रतिसंख्यानिरोधः कुशलाकुशला[6]व्याकृतानां धर्माणां तथतानिञ्ज्यं संज्ञावेदयितनिरोधश्च। तान्येतान्यष्टौ समानानि षड् भवन्ति षट् समानान्यष्टौ भवन्ति॥

स पुनरेकविधो धर्मधातुर्मनोगोचरार्थेन। द्विविधः। [7]प्रज्ञप्तिधर्मसंगृहीतोऽप्रज्ञप्तिधर्मसंगृहीतश्च॥ त्रिविधो रूप्यरूपी संस्कृतासंस्कृतश्च॥[2] चतुर्विधो रूपी प्रज्ञप्तिधर्मसंगृहीतः [ Tib 37b. 1 ] अरूपी चैतसधर्मसंगृहीतः अरूपी विप्रयुक्तप्रज्ञप्तिसंगृहीतः अरूप्यसंस्कृतप्रज्ञप्तिधर्म[3]-संगृहीतश्च॥ पञ्चविधः रूपचैतसिका[2]धर्माश्चित्तविप्रयुक्ता असंस्कृतमकुशल[4]मव्याकृतं च॥ षड्विधः वेदना संज्ञा संस्काराः सम्प्रयुक्तविप्रयुक्ता रूपमसंस्कृतं[3]च॥ सप्तविधो वेदना संज्ञा चेतना क्लिष्टोऽक्लिष्टो रूपमसंस्कृतं च॥ अष्टविधः कुशलोऽकुशलोऽव्याकृतश्चेतना[5] संज्ञा संस्कारा [4] रूपमसंस्कृतं च। नवविधोऽतीतानागतादिभेदेन। दशविधो दशविधार्थेन अनुबन्धोत्पादार्थेन[6] आलम्बनानुभवनार्थेन आलम्बननिमित्तग्रहणार्थेन[5]आलम्बनाभिसंस्कारार्थेन तेषामेव धर्माणामवस्थाभेदार्थेन अनित्यविसंयोगार्थेन[7] नित्यविसंयोगार्थेन नित्याविपीतार्थेन सुखदुःख-

---

1 For *āsamjñika* or *asamjñi-samāpatti*, Tib hdu śes med pahi sñoms par hjug pa

2 Tib too, has the same reading (hdus byas dan/ hdus. ma byas so Acc. to it one may read *samskṛtāsamskṛtaś ca* Otherwise, here are four instead of three.

3 Tib. gzugs. can ma yin pa. hdus. ma byas par gdans. pahi. chos su bsdus paho MS *prajñaptyapi ajñapti°*

4 Omitted in Tib 5 Tib. *vedanā* (tshor. ba dan.)

6 Tib rjes su. hbrel bahi skye bahi (Xy bohi) don dan. MS *anubandhānutpādārthena*.

7 Tib lit *anityavisamyogārthena* (mi. rtag pa. dan ma bral. bahi. don dan)

२० क, Tib. 37a. 3

वि[6]संयोगार्थेन्[1] नो तु वेदयितविसंयोगार्थेन वेदयितविसंयोगार्थेन[2] [च]। तान्येतान्याध्यात्मिकवाह्यानामायतनानां षष्ट्युत्तराणि षट् प्रभेदशतानि ॥

तत्र चरत्याक्षयाद्रूपाणा दर्शनाय चरत्याक्षयाद्रूपाणां [7]दर्शनायेति[3] चक्षुः। श्रवा अत्रोपलभ्यन्त[4] इति श्रोत्रम्। गन्धानाघ्रातीति घ्राणं। जिघत्सादौर्वल्यं प्रतिविनोदयति विविधालापपरिचया[ Tib 38a 1 ]च्चाह्वानं करोतीति जिह्वा। कात्स्न्र्येनेन्द्रिय[क्रिया]नुगतः कायोऽयमिति ≠ कायः[5]/दीर्घरात्रमेतद्बालैः केलायितं ममायितमेतन्मम एषोऽहमस्मि एष म आत्मेति। [2]अत्र च लोकस्य संज्ञा सत्त्वो नरो जीवो जन्तुर्मनुजो मानव इति मन इति ॥

[6]तत्र तत्र देशे निरूप्यते[7] रोहति चेति तस्माद्रूप[मिति][8] वदन्नेव शरति वदन्नेव शरति[9] तस्माच्छब्दः।[10] [3]अनुशेरते चास्मिन्विद्या वादास्तस्माच्छब्दः।

---

1 Tib omits *visamyoga*

2 Here the reading seems to be doubtful The last two kinds may be taken together For *no tu° rthena* Tib tshor ba dan bral ba ma yin. pahi don dan tshor ba dan bral bahi don dan

3 For the repetition of the words here see the following few sentences where the same thing will be found

4 Omitted in Tib.

5 For *ayam* in the sentence MS *asya*. The Tib version runs here thus lús. ni, hdi ni dban po byed par (?) gyi ijes su son bas ma lus. so

6 Tib. adds here yul, [de ] dan. der. brtag pai byar. run ba dun(=tatra tatra deśe parīksyate)

7 Tib gnod par bya bar. run. žin ( =bādhyte ) Acc. to the Buddhist tradition *rūpa* in such cases is that which changes under the physical condition of cold, heat, etc (*śītoṣṇādibhir vikāram āpadyata iti rūpam*) It is therefore from √*rūp* which in the sense of √*bādh* 'to damage', 'injure,' is quite different from √*rūp* 'to view' etc See Yaśomitra's Abhidharmakośavyākhyā on I 13, and AK I 24. with notes by Poussin After *nirūpyate* MS is not supported by Tib

8 Tib. žes byaho

9 Here *śarati* is evidently for *śīryate* from √*srī*, class 9 but here class 1 'to crush' is used In Tib read hjig pa for hjigs. pa. In this version the sentence is only once, and not twice as in the preceding sentences in Skt

10 Tib. sgra. MS wrongly *chandah*. So in the next sentence

अनुवातं गच्छति धावति तस्माद्गन्धः। रोगाणां सञ्चयनः[1] खादनीयश्च तस्माद्रसः। कायेन स्पृश्यत इति स्प्रष्टव्यं। धारयति केवलं मनोविषयत्वं [4] धारयति केवलं मनोविषयत्वमिति धर्मः ॥[2]

इत्येवंभागीय एषां धर्माणां[3] प्रभेदो द्रष्टव्यः ॥

तत्रोद्दानं

स्वभावतश्चाश्रयत आलम्बनसहायतः।
कर्मतश्च प्रवृत्तिः स्याच्चेतसः पञ्चभिर्मुखैः ॥

[5] तत्रैभिः पञ्चभिर्धर्मैः षड्विज्ञानकायिकैः स्वभावेनाश्रयेणालम्बनेन सहायेन कर्मणा च स्कन्धकौशल्यमपि संगृहीतं वेदितव्यं।[4] धातुकौशल्य-मायतनकौशल्यं प्रतीत्यसमुत्पाद [6] कौशल्यं स्थाना [ २१क ] नास्थानमिन्द्रिय-कौशल्यमपि वेदितव्यं ॥

नववस्तुकमपि बुद्धवचनं संगृहीतं वेदितव्यं। नव वस्तूनि कतमानि। सत्त्ववस्तु उपभोगवस्तु [7] उत्पत्तिवस्तु स्थितिवस्तु संक्लेशव्यवदानवस्तु[5] वैचित्र्यवस्तु दैशिकवस्तु देश्यवस्तु परिषद्वस्तु च ॥

तत्र सत्त्ववस्तु पञ्चोपा [Tib. 38b 1] दानस्कन्धाः। तदुपभोगवस्तु द्वादशायतनानि। उत्पत्तिवस्तु द्वादशाङ्गः प्रतीत्यसमुत्पादः। उत्पन्नस्य स्थितिवस्तु चत्वार आहाराः।

संक्लेशव्यवदानवस्तु [2] चत्वार्यार्यसत्यानि। वैचित्र्यवस्तून्यपरिमाणा धातवः। दैशिकवस्तु बुद्धास्तच्छ्रावकाश्च। देश्यवस्तु स्मृत्युपस्थानादयो

---

1 Tib. sdud. pa. MS *āvārataḥ*(?)

2 Both MS and Tib (rnams ) plural number.

3 Tib omits *eṣām dharmānām*.

4 MS *vedayitavyam* The case is the same with the next sentence

5 As below and supported by Tib. rendering . kun nas. ñon. mons pa. dan rnam par. byan. bahi. dons, po MS has *saṃkleśavastu °vyavadānavastu*.

२० ख, Tib. 38a. 3

वोधिपक्ष्या धर्माः। परिपद्[3]वस्त्वष्टौ परिषदः[1]। क्षत्रियपरिपद्। ब्राह्मणपरिपद्।[2] गृहपतिपरिषद्। श्रमणपरिषद्। चतुर्महाराजकायिकपरिपद् त्रयस्त्रिंशत्परिपत् मारपरिषद् ब्राह्मणपरिषच्चेति।

उद्दानं[3]

समुदायः कलापश्च[4]अध्वलक्षणप्रत्ययाः।
कुशलादिप्रभेदश्च कौशल्यवस्तु पश्चिमं॥

योगाचारभूमौ मनोभूमिर्द्वितीया[4] समाप्ता॥

---

1 Omitted in Tib.

2 MS here and below *parsat*.

3 In MS it is after the following stanza

4 Tib. gñis. pa.

२१ क, Tib. 38b. 2

## [ सवितर्का सविचारा भूमिस्तृतीया। अवितर्का विचारमात्रा भूमिश्चतुर्थी। अवितर्काविचारा भूमिश्च पञ्चमी ]

[Tib 38b 4] सवितर्का सविचारा भूमिः कतमा। अवितर्का[5] विचारमात्रा भूमिः[1] । कतमा। अवितर्काविचारा भूमिः कतमा। पिण्डोद्दानं।

धातुलक्षणयोनिश्च अयोनिः क्लेशपश्चिमं।

इत्यासां तिसृणां भूमीनां धातुप्रज्ञप्तिव्यवस्थानतोऽपि। लक्षण[6]प्रज्ञप्तिव्यवस्थानतोऽपि। योनिशो मनस्कारप्रज्ञप्तिव्यवस्थानतोऽपि योनिशोमनस्कारप्रज्ञप्तिव्यवस्थानतोऽपि। [संक्लेशप्रज्ञप्तिव्यवस्थानतोऽपि][2] व्यवस्थानं वेदितव्यं॥

उद्दानं

संख्या[7]स्थानं परिमाणमायुश्च परिभोगता।<br>
उत्पत्ति[3]रात्मभावश्च हेतुप्रत्ययविस्तरः॥

धातुप्रज्ञप्तिव्यवस्थानं कतमत्। तदष्टाकारं वेदितव्यं। संख्या[व्यव][4]स्थानतोऽपि। स्थानान्तर[Tib 39a 1]व्यवस्थानतोऽपि सत्त्वपरिमाणव्यवस्थानतोऽपि। तेषामेव सत्त्वानामायुर्व्यवस्थानतोऽपि। तेषामेव सत्त्वानां सम्भोगपरिभोगव्यवस्थानतोऽप्युत्पत्तिव्यवस्थानतो[2]ऽप्यात्मभावव्यवस्थानतोऽपि। हेतुप्रत्ययव्यवस्थानतोऽपि॥

तत्रेदं संख्याव्यवस्थानं। त्रयो धातवः कामधातू रूपधातुरारूप्यधातुरिति। एते पर्यापन्ना[5] धातवः। अपर्यापन्नश्च सोपायः [3] सत्कायनिरोधोऽनास्रवो धातुर्निष्प्रपञ्चः[6]॥

---

1 Chapters III, IV and V are taken together in both the texts Skt. and Tib The concluding colophon also supports it.

2 Tib knn. nas ñon. mons gdags. pa. rnam. par. bžag pa.

3 MS *upapattir*, but see below, and consider the metre

4 Tib rnam pa, bźaq. pa.

5 Tib. mtogs. pa for which read gtogs pa.

6 MS °*sravā* (fem). See p.74, note *dhātunisprа*°

२१ क, Tib 38b. 4

तत्र सकले कामधातौ[1] रूपधातौ च प्रथमध्याने ध्यानान्तरिकं[2] समापत्त्युपपत्तिकं [4] स्थापयित्वा सवितर्का सविचारा भूमिः समापत्त्युपपत्तिकं ध्यानान्तरिक[२१ख]मवितर्काविचारमात्रा भूमिः। यां भावयित्वैकत्यो महाब्रह्मत्वं प्रतिलभते। [5] द्वितीयं ध्यानमुपादायावशिष्टो[3] रूपधातुः सकलश्चारूप्यधातुरवितर्काविचारा भूमिः। तत्र वितर्कविचारवैराग्ययोगेनावितर्काविचारा भूमि[6]रित्युच्यते। न त्वसमुदाचारेण। तथा हि। काम्येभ्योऽवीतरागस्याप्यवितर्काविचार एकदा मनःप्रचारो भवत्युपदेशमनस्कारविशेषतः[7] वीतरागस्यापि च वितर्कविचारेभ्यो वितर्कविचारसमुदाचारो भवति। तद्यथा व्युत्थितानां।[4] तदुपपन्नानां तत्रानास्रवो [5]धातुर्योऽसंस्कृतः समापत्तिसंगृहीतः। तत्रापि [Tib. 39b. 1] प्रथमं ध्यानं[6] सवितर्का सविचारा भूमिः। वितर्कविचारस्थानीयेषु धर्मेषु तथतामवलम्ब्य तत्समापत्तेर्नो तु विकल्पप्रचारतः। शिष्टं पूर्ववत्॥

[ कामधातुः ]

तत्रेदं स्थानान्तर[2]व्यवस्थानं। कामधातुः षट्त्रिंशत्स्थानान्तराणि। अष्टौ[7] महानरकस्थानानि। तद्यथा। सञ्जीवः कालसूत्रं सङ्घातो रौरवो महारौरवस्तापनो महा[3]तापनोऽवीचिश्च। तेषामेव महानरकाणां तिर्यग्दशभि[8]र्योजनसहस्रैः परेणाष्टौ शीतनरकस्थानानि। तद्यथा अर्बुदो[9] निरर्बुदोऽटटो हुहुव [4]उत्पलः पद्मो महापद्मः। इतो द्वात्रिंशद्यो[10]जनसहस्रैः सञ्जीवस्ततः परेण

---

1 Tib hdod. pahi. khams mthah. dag dan

2 Tib bsam. gtan. khyad par can for *antarika* Tib. *viśesa*

3 MS *mupādāya visisto*.

4 Tib lans. pa rnams la. MS *vyutthinām*

5 MS °*sravā*. See page 73, note 6

6 Tib. lit *prathamasya dhyānasya* (bsam. gtan dan. pohi ).

7 MS adds here *sthānāntaravyavasthānato' pi*

8 Tib omits *daśabhir*

9 This and the following eight words are in the neuter gender in MS.

10 MS *dvātrimśad yo*.

२१ क, Tib. 39a. 3

चतुःसहस्रयोजनान्तराणि तदन्यानि द्रष्टव्यानि। [5]यथा सञ्जीवमहानरकस्थानमेवं प्रथमशीतनरकस्थानं। ततः परेण द्वियोजनसहस्रान्तरितानि तदन्यानि द्रष्टव्यानि॥

प्रेतस्थानान्तर[6]मसुरस्थानान्तरं।[1] तिर्यञ्चो देवमनुष्याश्च सहचरा एव।[2] अतस्तेषां स्थानान्तरं पृथङ् न व्यवस्थाप्यते[3]। चत्वारो द्वीपाः पूर्ववत्। अष्टावन्तरद्वीपाः।[4] षट् कामावचरा देवाः [7] चातुर्महाराजकायिकास्त्रायस्त्रिंशा यामास्तुषिता निर्माणरतयः परनिर्मितवशवर्तिनश्च देवाः। मारभुवनं पुनः परनिर्मितवशवर्तिषु देवेषु पर्यापन्नं न [स्थान]ान्तरविशिष्टं।[5] [Tib. 40a. 1] प्रत्येकनरकाः सामन्तनरकाश्च महानरकशीतनरकसमन्त एव न स्थानान्तरविशिष्टाः[6] [2][7]मनुष्येष्वप्युपलभ्यन्ते। तदेके प्रत्येकनरकाः। यथोक्तं स्थविरमहामौद्गल्यायनेन सत्त्वमहं पश्याम्यादीप्तं प्रदीप्तं सम्प्रज्वलितमेकज्वालीभूतमित्येवमादि। [3] इतीमानि षट्त्रिंश[२२क ]त्स्थानान्तराणि कामधातुरित्युच्यते।

[ रूपधातुः ]

अष्टादश स्थानान्तराणि रूपधातुः। ब्रह्मकायिका ब्रह्मपुरोहिता [4] महाब्रह्माणो मृदुमध्याधिमात्रपरिभावितत्वात्प्रथमध्यानस्य। परीत्ताभा अप्रमाणाभा आभास्वरा मृदुमध्याधिमात्रपरिभावितत्वाद्द्वितीयस्य ध्यानस्य। परीत्तशुभा

1 In Tib these two words are taken with the following sentence reading yi. dwags. kyi gnas gźan dan. lha. ma yin gyi gnas. gźan dan

2 MS *manuṣyā tu* with a query mark Tib supports the reading as given (lha, dan mi dan lhan cig. rgyu ba ñid)

3 Tib rnam par mi bźag go MS *pṛthag vyavasthāpyate*

4 Omitted in Tib These *dvīpas* are as in AK III 56:
dehā videhāḥ kuravaḥ kauravāś cāmarā varāḥ /
aṣṭau tu tadantaradvīpāḥ śāṭhā uttaramantriṇaḥ ll

5 Tib *sthānāntaraviśiṣṭam* (gnas gžan kyad. par can. yin no) Here *na* is omitted

6 For *śīta° viśiṣṭāḥ* Tib has gran. bahi. sems. can dmyal bahi ñe hkhor ñid de / gnas gžan bye. brag can med do ll MS *śītanarakasāmantanarake naiva sthānā°*

7 MS adds before *ity api*.

२१ ख, Tib. 39b. 4

अप्रमाणशुभाः शुभकृत्स्ना मृदुमध्याधिमात्रपरिभावितत्वात्तृतीयस्य ध्यानस्य। [5]अनभ्रकाः पुण्यप्रसवा बृहत्फला मृदुमध्याधिमात्रपरिभावितत्वाच्चतुर्थस्य ध्यानस्य। असंज्ञिकं [6] बृहत्फलपर्यापन्नत्वान्न स्थानान्तरमार्यासाधारणं। पञ्च शुद्धावासभूमयः [7] अबृहा अतपाः सुदृशाः सुदर्शना अकनिष्ठाश्च मृदुमध्याधिमात्राधिमात्रतराधिमात्रतमपरिभावितत्वाद्व्यवकीर्णभावितस्य चतुर्थस्य ध्यानस्य। शुद्धावासांश्च समतिक्रम्य महेश्वरस्थानं यत्र दशभूमिस्था बोधिसत्त्वा[Tib. 40b 1]दशम्या भूमेः परिभावितत्वादुत्पद्यन्ते ॥

---

## [ आरूप्यधातुः ]

आरूप्यधातुश्चत्वारि स्थानानि। न वा किञ्चित्स्थानान्तरं।

---

## [ सत्त्वपरिमाणव्यवस्थानं ]

तत्रेदं सत्त्वपरिमाणव्यवस्थानं। जाम्बुद्वीपकानां तावन्मनुष्याणा[2]मनियतमाश्रय[1]परिमाणं। एकदा महद्भवत्येकदाणुकं। तत्पुनः स्वेन हस्तेनार्धचतुर्थप्रमाणं। पूर्वविदेहा नियताश्रयप्रमाणाः। तेऽपि स्वेन हस्तेनार्धचतुर्थहस्तप्रमाणा महाकायतराश्च। [3]यथा पूर्वविदेहका एवमवर[2]-गोदानीयका उत्तरकौरवाश्च महाकायतराश्च ॥

चातु[3]र्महाराजकायिकानां [देवानां][4] चतु[4]र्भागं क्रोशस्य प्रमाणं। त्रयस्त्रिंशानां सातिरेकपादप्रमाणं। शक्रस्य देवेन्द्रस्यार्धक्रोशप्रमाणं यामानामर्धक्रोशं[5]। ततः परेण सर्वेषु तदन्येषु देवनिकायेषु पादपादमधिकं परिमाणं[6] द्रष्टव्यं। ब्रह्मकायिकानामर्धयोजनं। ब्रह्मपुरोहितानां [5]योजनं। महाब्रह्मणां द्व्यर्धयोजनं। परीत्ताभानां द्वे योजने। ततः परेण तदवशिष्टेषु

---

1 That is, *deha* 'body' (Tib. lus).
2 Sometimes *avara* is read as *apra* in such cases
3 See AK. III 159.
4 Tib lha rnams. kyi.
5 MS neuter gender
6 Omitted in Tib

देव[1]निकायेषु तद्द्विगुणमाश्रयपरिमाणं द्रष्टव्यं स्थापयित्वा[6]ऽनभ्रकान्। तत्र पुन[2]र्योजनत्रयं स्थापयितव्यं[3]॥

महानरकेषु प्रमाणनियमः। येन प्रगाढतरं पापकमकुशलं कर्म कृतं भवत्युपचितं तस्य महत्तर आश्रयो निर्वर्तते। इतरेषां पुनरन्यथा। [7]यथा महानरकेष्वेवं शीतनरकेषु प्रत्येकनरकेषु सामन्तनरकेषु प्रत्येकनरकेषु तिर्यक्प्रेतेषु। असुराणां [Tib 41a 1] त्रयस्त्रिंशद्देवव्यवस्थापनवदाश्रयव्यवस्थानं वेदितव्यं। आरूप्येषु पुनररूपित्वात्परिमाणं नास्ति।

[ सत्त्वायुर्व्यवस्थानं ]

तत्रेदमायुर्व्यवस्थानं। जाम्बूद्वीपकानां तावन्मनुष्याणां त्रिंशद्[2]रात्रकेण मासेन द्वादशमासकेन [ २२ख ] च संवत्सरेणानियतमायुष्प्रमाणं। एकदा परिमाणायुषो भवन्त्येकदाशीतिवर्षसहस्रायुषः। एकदा यावद्दशवर्षायुषः।[4] पूर्वविदेहकाणां[3]नियतमर्धतृतीयानि वर्षशतान्यायुषः। अवरगोदानीयानां पञ्च [शतानि[5]]। उत्तरकौरवाणां वर्षसहस्रमायुः। यत् खलु मनुष्याणां पञ्चाशद्वर्षाणि तच्चातुर्महाराजकायिकानां [देवाना][6]मेकं रात्रिन्दिवं। तेन[7] रात्रि[4]न्दिवसेन त्रिंशद्रात्रकेण[8] मासेन द्वादशमासकेन संवत्सरेण दिव्यानि पञ्च वर्षशतान्यायुः। यत्खलु मनुष्याणां वर्षशतं

---

1 Omitted in Tib

2 Not in Tib

3 In such cases causative of √sthā is to be taken in the sense of 'to set aside' as in Pali.

4 AK, III. 78·
sahasram āyuh kurusu dvayor ardhārdhavarjitam ।
ihāniyatam ante tu daśābdān ādito' mitam ॥

5 Tib lo lna. brgya. ho

6 Tib lha rnams kyi.

7 Tib *tādṛśena* (de lta. buhi), and so throughout the following passage

8 Tib lit *triṃśatā* (sum cu ) omitting *rātrakena*

२२ क, Tib 40b. 5

 

तत्तु त्रयस्त्रिंशानां [देवाना][1]मेकं रात्रिन्दिवसं। तेन रात्रिन्दिवसेन त्रिंशतैको मासः][2] पूर्ववद्दिव्यं[3]। [5] तदन्येषु देवनिकायेष्वहोरात्रेणापि तद्द्विगुणेन तेषां देवानामायुर्यावत्परनिर्मितवशवर्त्तिषु देवेषु ॥

यत्खलु चातुर्महाराजकायिकानां देवानां कृत्स्नमायुस्तत् सञ्जीवे [6] महानरक एकं रात्रिन्दिवसं। तेन रात्रिन्दिवसेन त्रिंशद्रात्रकेण मासेन द्वादशमासकेन च संवत्सरेण नारकाणि पञ्चवर्षशतान्यायुः। यथा चातुर्महाराजकायिकानामायुषा [7] सञ्जीवे महानरके उपपन्नानामायुरेवं त्रयस्त्रिंशानामायुषा कालसूत्रोपपन्नानामायुः। यामानामायुषा सङ्घातोपपन्नानामायुः। तुषिताना[Tib. 41b. 1]मायुषा रौरवोपपन्नानामायुः। परनिर्मितवशवर्तिनामायुषा [5]तपनोपपन्नानामायुर्वेदितव्यं। [2] प्रतापनोपपन्नानां सत्त्वानामन्तरकल्पेनार्धकल्पमायुः। अवीचिकानां सत्त्वानामन्तरकल्पेन कल्पमायुः। यथा त्रयस्त्रिंशानामेवमसुराणां तिर्यक्[3]प्रेतानामनियतमायुः। शीतनरकोपपन्नानां सत्त्वानां महानरकोपपन्नेभ्यः सत्त्वेभ्य उत्तरोत्तराणामुपार्धेनायुर्वेदितव्यं।

प्रत्येकनरको[4]पपन्नानां सत्त्वानामप्यनियतमायुः। ब्रह्मकायिकानां सत्त्वानां विंशत्यन्तरकल्पकेन कल्पेन कल्पमायुः। ब्रह्म[5]पुरोहितानां [सत्त्वानां][6] चत्वारिंशदन्तरकल्पकेन [कल्पेन कल्पमायुः][7]। महाब्रह्मणां षष्ट्यन्तरकल्पकेन कल्पेन कल्पमायुः। परीत्ताभा[6]नामशीत्यन्तरकल्पकेन कल्पेन द्वौ कल्पौ। तत ऊर्ध्वं तदन्येषु देवनिकायेषु तद्द्विगुणतद्द्विगुणमायुः [7] स्थापयित्वानभ्रकान्। तत्र पुनस्त्रयः कल्पाः स्थापयितव्याः।

आकाशानन्त्यायतनोपपन्नानां सत्त्वानां विंशतिः कल्पसहस्राण्यायुः। विज्ञानानन्त्यायतनोपपन्नानां [सत्त्वानां] [8]चत्वारिंशत्। [Tib 42a 1]

---

1 Tib. lha rnams kyi See AK-Vyākhyā, III 1.
2 Tib. ñin žag. sum cu. la zla ba. gcig •ste.
3 Tib. omits *divyam*.
4 Before it MS has *sañjīvanaka* not supported by Tib
5 Sometimes read as *tāpana*
6 Tib. sems can. rnams. kyi
7 Tib. lit. *eka kalpa* (bskal. pa. gcig go)
8 Tib. sems can rnams kyi

२२ ख, Tib. 41a. 4

आकिञ्चन्यायतनोपपन्नानां षष्टिः। नैवसंज्ञानासंज्ञायतनोपपन्नानामशीतिः[1] कल्पसहस्राण्यायुः। उत्तरकुरून्स्थापयित्वा। अस्त्यन्तरे[2] [2]कालक्रिया तत्र मनुष्येषु तिर्यक्प्रेतेषु च किट्टालकायाः सन्तिष्ठन्ते। देवेषु नरकेषु च सहैव विज्ञानेन[3]अकिट्टकायाः सन्तिष्ठन्ते ॥

[ संभोगपरिभोगव्यवस्थानं ]

तत्र संभोग[3]परिभोगव्यवस्थानं। यदुत सुखदुःखानुभवतोऽपि। आहार-परिभोगतोऽपि। मैथुनपरिभोगतोऽपि ॥

तत्र नरकेषु यद्भूयसा सत्त्वाः कारणादुःखं प्रति[4]संवेदयन्ति तिर्यक्ष्वन्योन्यभक्षणदुःखं। प्रेतेषु क्षुत्पिपासा[4]दुःखं। मनुष्येषु पर्येष्टिव्यसनदुःखं। देवेषु [ २३ क ] च्यवनपतनदुःखं प्रति[5]संवेदयन्ति ॥

तत्र सञ्जीवे महानरके एवंरूपं कारणादुःखं प्रत्यनुभवन्ति बाहुल्येन। तत्र ते सत्त्वा अन्योन्यं सङ्गम्य कर्माधिपत्यसम्भूतैर्विविधैः प्रहरणैः क्रम-समुत्पन्नैर[6]न्योन्यं[5] विप्रघातिकां कुर्वन्तो निश्चेष्टाः पृथिव्यां प्रपतन्ति। तत आकाशाच्छब्दो निश्चरति सञ्जीवन्तु इन्त सत्त्वा इति। ततः पुनस्ते सत्त्वा व्युत्थाय तेनैव प्रकारेणान्योन्यविप्रघातिकां कुर्वन्ति। [7] ततो निदानं [6] च दीर्घकालं दुःखं प्रत्यनुभवन्ति यावत्तत्पापकमकुशलं कर्म सर्वेण सर्वं[7] परिक्षीणं व्यन्तीकृतं। तस्माच्च पुनः स नरकः सञ्जीव इत्युच्यते ॥

तत्र कालसूत्रमहानरक [Tib. 42b. 1] एवंरूपं कारणादुःखमनुभवन्ति बाहुल्येन। तत्र ते सत्त्वास्तत्पर्यापन्नैर्यातनापुरुषैः कालकेन सूत्रेण माप्यन्ते। चतुरस्रकमप्यष्टास्रकमप्यनेकविचित्रविभक्तिप्रकारमपि

1 Tib. only *aśīti*, omitting *kalpa*
2 So the MS Tib indistinct.
3 Tib indistinct.
4 Tib bkres śin. skom. paḥi.; MS for this has *utkarsa.*
5 Tib. gcig la. geig. su. below. MS *anyonyam*
6 Tib. *tato nidānāt* (gži, las,). See below
7 Tib. thams. cad kyi thams cad. du See below. MS *sarvavanta.*

माप्यन्ते। मापिताश्च तथा [2] तथा खन्यन्ते[1] तक्ष्यन्ते सम्प्रतक्ष्यन्ते[2]। ततो निदानं च दीर्घकालं दुःखं प्रत्यनुभवन्ति यावत्तत्पापकमकुशलं कर्म सर्वेण सर्वं न परिक्षीणं भवति व्यन्तीकृतं। तस्माच्च पुनः स नरकः [3] कालसूत्र इत्युच्यते॥

तत्र सङ्घाते महानरक एवंरूपं कारणादुःखं प्रत्यनुभवन्ति बाहुल्येन। तत्र ते सत्त्वा[3] यदान्योन्यमैकध्यमभिसंक्षिप्ताः सङ्घातमापन्ना भवन्ति तदा तत्पर्यापन्नै [4] र्यातनापुरुषैर्द्वयोरजमुखयोरायसयोर्महापर्वतयोर्विवरमनुप्रवेश्यन्ते। समनन्तरप्रविष्टाश्च[4] ताभ्यां पर्वताभ्यां प्रपीड्यन्ते। तेषां प्रपीडितानां सर्वतोमुखं रुधिरनद्यः प्रस्रवन्ति प्रघरन्ति। यथाजमुखयो [5] रेवं मेषमुखयोर्हयमुखयोर्हस्तिमुखयोः[5] सिंहमुखयोर्व्याघ्रमुखयोः। पुनः सङ्घातमापन्ना [6] आयसे महायन्त्रे प्रक्षिप्य[6] प्रपीड्यन्ते यथेक्षुक्षोदः[7]। तेषां तत्र प्रपीड्यमानानां रुधिरनद्यः प्रस्रवन्ति प्रघरन्ति। पुनः सङ्घातमापन्नानामुपरिष्टादायसी महाशिला प्रपतति या तान्सत्त्वान [7] योमय्यां पृथिव्यां सञ्छिन्दति[8] सम्भिन्दति[9] सङ्कुट्टयति सम्प्रदालयति। तेषां तत्र तत्र सञ्छिद्यमानानां सम्भिद्यमानानां सङ्कुट्ट्यमानानां सम्प्रदाल्यमानानां[10] रुधिरनद्यः प्रस्रवन्ति प्रघरन्ति। ततोनिदानं [Tib 43a 1] च दीर्घकालं दुःखं प्रत्यनुभवन्ति याव-

1 √*khan* here 'to pierce' (?) Tib seems to read gśig (?) cin
2 MS *taksante sampratakṣante.*
3 MS repeats it
4 MS °*ntarapravi*° Tib tshans ma thag tu Here the meaning of tshans is not clear
5 Tib glan. po chehi gdon lta bu gñis dan.
6 Omitted in Tib.
7 MS ˳ksodam Tib lit. *ikṣupiṇḍakriyāvat* (bu. ram sin brduns. bya. ba. bžin. du)
8 For this and the following form see Whitney *Root*, etc Leipzig, 1885, pp 509, III
9 In MS these two verbs are in the plural number, and the latter is *sambhidanti.*
10 MS omits *sam-*.

२३ क, Tib 42b 1

तत्पापकमकुशलं कर्म सर्वेण सर्वं [ २३ ख ]न परिक्षीण भवति व्यन्तीकृतं । तस्माच्च पुनः स नरकः सङ्घात इत्युच्यते ॥

तत्र रौरवे महानरक [2] एवंरूपं कारणादुःखं प्रत्यनुभवन्ति बाहुल्येन । तत्र ते सत्त्वा लयनगवेषिण आयसमगारं प्रविशन्ति । तेषां तत्र प्रविष्टानामग्निर्मुच्यते यतस्त आदीप्ताः प्रदीप्ताः सम्प्र[3]ज्वलिता ध्यायन्ति[1] । ते तत्र रुवन्त्यार्तस्वरं क्रन्दन्ते[2] ततोनिदानं च दीर्घकालं दुःखं प्रत्यनुभवन्ति यावत्तत्पापकमकुशलं कर्म सर्वेण सर्वं न[3] परिक्षीणं भवति व्यन्तीकृतं । तस्माच्च [4]पुनः स[4] नरको रौरव इत्युच्यते ॥

तत्र महारौरवे महानरकेऽयं विशेषो यो रौरवे ऽगारः स तत्रागार एव विज्ञातव्यः सगर्भस्तु । तस्माच्च [5] पुनः स नरको महारौरव इत्युच्यते ॥

तत्र तपने महानरक एवंरूपं कारणादुःखं प्रत्यनुभवन्ति बाहुल्येन । तत्पर्यापन्ना यातनापुरुषास्तान्सत्त्वाननेकयोजनायां[5] कफल्यां[6] [6] प्रक्षिप्य तप्तायां प्रतप्तायां सम्प्रज्वलितायामावर्तयन्ति परिवर्तयन्ति तापयन्ति सन्तापयन्ति तद्यथा मत्स्यान् । पुनरयोमयेन शल्ये[7]नाधस्ता[8]द्विध्यन्ति । स च शल्यः [7] पृष्ठान्तेन प्रविश्य शिरसा निर्गच्छत्यादीप्तः प्रदीप्तः । तेषां च सत्त्वानां मुखादक्षितारकाभ्यो नासिकाबिलेभ्यः[9] सर्वरोमकूपेभ्यो ज्वाला निर्गच्छन्ति । पुन[Tib. 43b 1]रयोमय्यां पृथिव्यां तप्तायां सन्तप्तायां प्रज्वलितायामुत्तानकान्स्थापयित्वावमूर्धकान् वा तप्तैः सन्तप्तैः सम्प्रज्वलि-

---

1 Tib *dahyante* reading bsreg (Xy. bsrag) par. hgyur ro.
2 MS singular.
3 Omitted in MS.
4 Omitted in Tib
5 Tib. dpag. tshad. du. ma. yod pa Here is no *aneka*
6 Tib. lit. *lauhakatāhe* (lcags. zans) For *kaphalī* or *kaphalikā* (cf. *kapālikā*) in Tib. we have sla na or slan (colloq)
7 In Tib *śalya* is zug. rnu, but it is omitted here
8 Omitted in Tib. which adds here *santāpayanti*
9 Tib. here and in the following word has the dual number (gñis).

२३ क, Tib. 43a. 1

तैरयोघनैस्ताडयन्ति सन्ताडयन्ति सन्दालयन्ति[1] तद्यथा [2] नाम मांसबिल्वं ।[2] ततोनिदानं च दीर्घकालं दुःखं प्रत्यनुभवन्ति यावत्पापकमकुशलं कर्म सर्वेण सर्वं न परिक्षीणं भवति व्यन्तीकृतं । तस्माच्च पुनः स नरकस्तपन इत्युच्यते ॥

[3]तत्र प्रतापने महानरकेऽयं विशेषः । त्रिशूलशल्य°[3] पृष्ठतो निर्गमयन्ति । तस्य चैकशूल एकेन स्कन्धेन निर्गच्छति । द्वितीयो[4] द्वितीयेन तृतीयः[5] शिरसा[4] । तेषां ततोनिदानं मुखेनापि[6] [ज्वाला][7] निर्गच्छति । लौहपत्रैश्च तप्तैः स[5]न्तप्तैः सम्प्रज्वलितैः सर्वतः कायं परिवेष्टयन्ति पुनरयोमय्यां महत्यां लोह्यां[8] [9]क्वथितक्षारपूर्णाया[10]मादीप्तायां प्रदीप्तायां सम्प्रज्वलितायां ते सत्त्वा[6] ऊर्ध्वपादा[11] अवाङ्मुखाः प्रक्षिप्यन्ते । प्रक्षिप्ताश्चातप्यन्ते सन्तप्यन्ते[12] ऊर्ध्वमपि गच्छन्तोऽधोऽपि गच्छन्तस्तिर्यगपि गच्छन्तो यतश्च [२४ क] सङ्कीर्णत्वङ्मांसशोणिता भवन्त्यस्थिशङ्कला[13]मात्रावशिष्टाः [7] । तदा पुनरुत्क्षिप्योत्क्षिप्यायोमय्यां पृथिव्यां प्रतिष्ठाप्यन्ते । ततः सञ्जातत्वङ्मांसशोणिताः पुनरपि प्रक्षिप्यन्ते । शेषं तपनवत् । ततोनिदानं च पुनर्दीर्घकालं दुःखं [Tib. 44a. 1] प्रत्यनुभवन्ति । यावत्तत्पापकमकुशलं कर्म सर्वेण

---

1 For *dālayanti sandā°*, Tib dmyal. žin kun. tu. dmyal. lo. MS cikrayanti (?).

2 Tib śaḥi. snag bu Is it for *pinda*?

3 MS *triśūlya* Tib *triśūla°* (gsal žin rce. gsum). Before this it adds *lauha* (lcags) preceded by chu 'water'.

4 Tib. lit *itarah* (gcig. śos)

5 Tib lit. *madhyamah* (dbus ma)

6 Tib lit *mukhād* (kha nas) See above and below.

7 Tib. me lcehi hbar. ba.

8 The word *lohī* is a pot made of iron. *kaphalī* or *kaphalikā* referred to above, Tib. lcags zans, Hindī *lohiyā*.

9 Here MS adds *praksipya*.

10 Omitted in Tib.

11 Omitted in Tib

12 For these two last words. Tib *ākvathyante sankvathyante* (or *prakv°*) respectively (kun bskol žin rab. tu. bskol te).

13 Evidently for *śrnkhalā* ; Tib. *kankāla* (ken. rus).

२३ ख, Tib. 43b. 5

सर्वं न परिक्षीणं भवति व्यन्तीकृतं । तस्माच्च पुनः स नरकः प्रतापन इत्युच्यते ॥

तत्रावीचौ महानरक [2] एवंरूपं कारणादुःखं प्रत्यनुभवन्ति । तेषां सत्त्वानां पूर्वस्यां[1] दिश्यनेकयोजनशतायाः पृथिव्या आदीप्तायाः प्रदीप्तायाः सम्प्रज्वलिताया अग्निज्वाला[3]वेग आगच्छति [2]यतस्तेषां सत्त्वानां त्वचं भित्त्वा मांसं भित्त्वा स्नायुं छित्त्वास्थि भित्त्वास्थिमज्जानं। तद्यथा स्नेहवर्ति। एवं कृत्स्नमाश्रयं ज्वालाभि[4]र्व्याप्य तिष्ठति। यथा पूर्वस्या दिश एवं दक्षिणस्याः[3]पश्चिमाया[4] उत्तरस्या दिशः। ते च सत्त्वास्ततोनिदानमग्निस्कन्धरूपा एवोपलभ्यन्ते[5]। मिश्रीभूते तस्मिंश्चतुर्दिशागतेऽग्निस्कन्धे ते तत्र वीचिमपि[6] [5] नासादयन्ति दुःखानां वेदनानां नान्यत्र(?)[7] आर्तस्वरं[8] क्रन्दन्तो विज्ञायन्ते[9] सत्त्वा इति[10]। पुनरयोमयैः शूर्पैरयोमयानङ्गारानादीप्तान्सम्प्रज्वलितान्पुनन्ति[6] निपुनन्ति। पुनरयोमय्यां पृथिव्यामयो-

---

1 Tib. śar phyogs nas lit meaning *pūrvasyāḥ*, MS *pūrvasyām*. See below, MS *diśo'nekv*

2 Tib lit. *saḥ* (de) But see above.

3 MS omits *visarga*

4 MS °*māyām*

5 For upa°. Tib lit *dṛśyante* (snaṅ).

6 Used in the sense of *avakāśa* 'interval' 'aperture', Tib. bar-scabs, lit meaning *madhyāvakāśa* For Skt *vīci* or *vīcikā* in Mahāvyutpatti, 1013, we have bar chad meaning *antarāya* or *vighna* 'hindrance', 'interruption' The word is derived from *vi √añc* 'going away' Sometimes *vīci* means also 'rest' 'leisure' It is, however, suggested that because there is no interruption (*vīci*) of suffering it is *avīci* or because there is no happiness "*nāsti vīciḥ sukham atra*"—Bhānuji on Amarakośa, 1 9 1 See AK, iii 149.

7 So the MS, but it is not clear For it there is nothing in Tib

8 Read ñam (?) for tham in the Xylograph. *ārtasvaram krandanti* is a stock phrase. See Mahāvyutpatti, 4951.

9 Tib. *abhisahante* (mnon. par bzad. do.).

10 Omitted in Tib.

२४ क, Tib. 44a. 1

मयान्महापर्वतानारोहन्त्यप्यवतरन्त्यपि[1]। पुनर्मुखाज्जिह्वा[2] निर्गमय्यायः[3]-शङ्कुशतेन वितता भवति[4]। सा तथा वितता [7] विगतवलिका[5] विगतपुटिका[6] च तद्यथार्षभं चर्म। पुनस्तस्यामेवायोमय्यां पृथिव्यामुत्तानकान्स्थापयित्वायोमयेन विष्कम्भनेन मुखं विष्कम्भयित्वा दीप्ताः प्रदीप्ताः सम्प्रज्वलिताः। अयोगुडा मुखेषु क्षिप्यन्ते ये तेषां मुख[Tib 44b. 1]मपि दहन्ति कण्ठ[7]मप्यन्त्र[8]मपि दग्ध्वा च पुनरधोभागेन निर्गच्छन्ति। क्वथितं ताम्र[9]-मास्ये प्रक्षिपन्ति। तच्च मुखमपि दग्ध्वा कण्ठ[10]मप्यन्त्रमपि[11] दग्ध्वाधोभागेन दग्ध्वाधोभागेन प्रघरति। शेषं प्रतापनवत्। [2] ततोनिदानं पुनर्दीर्घकालं दुःखं प्रत्यनुभवन्ति यावत्तत्पापकमकुशलं कर्म सर्वेण सर्वं न परिक्षीणं भवति व्यन्तीकृतं। तस्माच्च पुनः स नरकोऽवीचिरित्युच्यते यत्र यद्भूयसा [3]नन्तर्यकारिणः सत्त्वा उपपद्यन्ते। तत्रेमान्यौदारिकाणि कारणानि[12] परिकीर्तितानि। न च पुनरेषु महानरकेषु तदन्यानि विचित्राकाराणि बहूनि कारणानि नोपलभ्यन्ते॥

सामन्तनरकेषु पुन[4]रेवं कारणादुःखं सत्त्वाः प्रत्यनुभवन्ति। सर्वे एते महानरकाश्चतुर्दिशं चतुष्कन्धा[13]श्चतुर्द्वारा आयसैः प्राकारैः परिवारिताः। तत्र च चतुर्दिशं [5] चतुर्भिर्द्वारैर्निर्गत्यैकैकस्मिन्द्वारे चत्वार उत्सदा[14] भवन्ति। तद्यथा। जानुमात्रं कुकूलं। यत्ते सत्त्वा लयनगवेषिणो

---

1 So in Tib hjog. tu. hjug cin phyir yan. hbab. tu, hjug go

2 MS jihvam

3 MS *nirnamayya* , Tib phyun. ste. phyun is sometimes used for Skt ut-√hr 'to take out'

4 So the MS. 5 'Free from wrinkle'.

6 'Free from fold' 7 MS *kanvam*. See below. Tib lkog ma

8 Tib rgyu ma MS *antrān api* See below.

9 For *tāmram* Tib. zans, MS tānam (?)

10 MS *kanvam*. 11 MS *antrām*

12 In the sense of *kāranā* Tib gnod 'pain', so below

13 See AKV on III 58 *catuhskandhā iti catuḥprakārā ity-arthah catuhsamniveśā ity apare*

14 MS *unmadā* Ak, iii, p 152 *adhikāyatanasthānatvād utsadāḥ. narakāvarodhād ūrdhvam eṣu kukūlādiṣu sīdanty atas ta utsadā ity apare*

२४ क, Tib. 44a. 6

ऽन्वाक्रामन्ति। [6] ते तत्र प्रपतिताः सशिरःपादका निमग्नास्तिष्ठन्ति। [२४ ख] [7] तत्र च कुणपे गूथमृत्तिके[1] कीटाः[2] प्राणिनो ये तेषां सत्त्वानां त्वचमपि च्छिद्रयन्ति मांसमपि स्नाय्वस्थ्यपि भिन्दन्ति [Tib 45a 1] ततोऽस्थिमज्जानमासाद्य विलिखन्ति ॥

तस्य खलु कुणपस्य गूथमृत्तिकस्य समनन्तरं स[न्निहित][3]मेव क्षुरधाराचितः पथो[4] यं[5] ते सत्त्वा लयनगवेषिणोऽन्वाक्रमन्ते। तत्र तेषां निक्षिप्ते पादे सञ्छिद्यते [2]त्वङ्मांसशोणितं। पुनरुत्क्षिप्ते पादे सञ्जायते त्वन्मांसशोणितं ॥

तस्य खलु क्षुरधाराचितस्य पथः[6] समनन्तरं स[न्नि]हितमेवासिपत्रवनं। तत्र ते सत्त्वा अभिगम्य लयनगवेषिण[3[स्तच्छायामासेवन्ति। तत्र तेषामधस्तान्निषण्णानां वृक्षाद्[7]सयः पतन्ति ये तेषां सत्त्वानामङ्गप्रत्यङ्गानि च्छिन्द्रयन्ति व्यतिभिन्दन्ति। तेषां तत्र पतितानां [4] श्यामशबला नाम[8] श्वान आगत्य पृष्ठी[9]वंशानुत्पाट्योत्पाट्य भक्षयन्ति ॥

तस्य खल्वसिपत्रवनस्य समनन्तरं सन्निहितमेवायःशाल्मलीवनं यत्ते सत्त्वा लयनगवेषिणोऽभिगम्याभिरोहन्ति। तेषां तत्राभिरोहतामधोमुखीभवन्ति कण्टकाः। [5] अवतरतामुर्ध्वीभवन्ति कण्टका ये [ते]षामङ्गप्रत्यङ्गानि च्छिद्रयन्ति व्यतिभिन्दन्ति। तत्र चायस्तुण्डानाम वायसां ये तेषां सत्त्वानामंसे वा शिरसि [6] वाभिनिपत्य[10]भित्त्वाक्षि[11]तारका उत्पाट्योत्पाट्य भक्षयन्ति ॥

---

1 Tib adds *śavavad durgandhe* (ro ltar mñam pa de na)

2 Tib. hbu, MS *kutānām* Tib adds the name as (lit) *tīkṣnādhāra* (mchu rnon)

3 Tib drun. ñid. na.

4 So below evidently, nominative, 5 MS *yat*

6 See p. 86, l 15

7 Tib śin las. MS *vrntāt*

8 MS *chadrayanti*, evidently for *chidrayanti* as below Tib. reads rnam. par gśigs. lit *vināśayanti*.

9 Xylograph is here indistinct

10 MS *abhinīdayitvā* (?) , Tib. illegible

11 MS *aksa* Tib. mig.

२४ ख, Tib. 44b. 5

तस्य खल्वयःशाल्मलीवनस्य समनन्तरं सन्निहितमेव वैतरणी नदी पूर्णा क्वथितस्य क्षारोदकस्य यत्र ते सत्त्वा लयनगवेषिणः प्रपतन्ति। त ऊर्ध्वमपि गच्छन्तः [7] खिद्यन्ते पच्यन्ते। अधस्तिर्यगपि गच्छन्तः खिद्यन्ते पच्यन्ते। [२५ क] तद्यथा नाम मुद्गा वा माषा कोला[1] वा कुलत्था वोदाराग्निसम्प्रदीप्तोदकायां स्थाल्यां प्रक्षिप्ताः। तस्याः खलु नद्या [Tib 45b 1] उभयतस्तीरे दण्डहस्ता वडिशहस्ता [जालहस्ता][2] सत्त्वा व्यवस्थिता ये तेषां सत्त्वानामुद्गन्तुमपि न प्रयच्छन्ति बडिशोद्धारिकया वा जालोद्धारिकया वा पुनरुद्धृत्योदाराग्नि[2]सन्तप्तायां भूमावुत्तानकान्प्रतिष्ठाप्य पृच्छन्ति हम्भोः सत्त्वाः किमिच्छथ। त एवमाहुः। न जानीमो वयमपि न पश्यामः अपितु बुभुक्षिताः स्मः। ततस्ते सत्त्वास्तेषां सत्त्वानामयोमयेन विष्कम्भनेन [3] मुखं विष्कम्भयित्वायोगुडान्[3]दाराग्निसन्तप्तानास्ये प्रक्षिपन्ति पूर्ववत्। सचेत्पुनरेवं वदन्ति पिपासिताः स्मः। ततस्ते तथैव क्वथितं ताम्रमास्ये प्रक्षिपन्ति। ततोनिदानं च पुनर्दीर्घकालं दुःखं [4] प्रत्यनुभवन्ति। यावत्तन्नरकवेदनीयं पापकमकुशलं कर्म सर्वेण सर्वं न परिक्षीणं भवति व्यन्तीकृतं॥

तत्र यश्च क्षुरधाराचितः पथो[4] यच्चासिपत्त्रवनं [5] यच्चायःशाल्मलीवनं या च वैतरणी नदी अयमेक उत्सद इति कृत्वा चत्वार उत्सदा भवन्ति॥

तत्र शीतनरके[5]पूपपन्नाः सत्त्वा एवंरूपं शीतदुःखं प्रत्यनुभवन्ति[6]। अर्बुदोपपन्नाः सत्त्वास्तद्भूमिकेनोदारेण शीतेन स्पृष्टा अर्बुदवत्सर्वाश्रयेण सङ्कोचमापद्यन्ते। तस्माच्च स नरकोऽर्बुद इत्युच्यते॥

तत्र निरर्बुदेऽयं विशेषः। [7] अर्बुदनिर्गत[6]मिवार्बुदं सङ्कोचमापद्यते। तस्माच्च नरको निरर्बुद इत्युच्यते॥

---

1 Evidently for *kuvalāḥ*. The word *kuvala* when masculine means a Jujube tree (zizyphus Jujuba, when neuter it means a fruit of that tree

2 Tib. lag na rgya thogs

3 MS °*gunān* 4 See p. 85, l. 9. 5 AK, III. 59

6 So the MS Tib. lit *arbudanirgama ivā*° reading chu. bur. rdol. ba. bžin. du.

तत्राटटो[1] हहवो [हुहुवो][2] वागभिलाप[3]कृतमेतत्तेषां सत्त्वानां [Tib. 46a. 1] नामव्यवस्थानं ॥

उत्पले पुनः शीतनरके तद्भूमिकेनोदारेण शीतेन स्पृष्टा व्यानीलायमाना· पञ्चधा षड्धा त्वचां स्फोटमापद्यन्ते। तस्माच्च स नरक[2] उत्पल इत्युच्यते ॥

तत्र पद्मेऽयं विशेषः। नीलतां समतिक्रम्य व्यालोहितायमाना द[श-]धा वा भूयो वा त्वचां स्फोटमापद्यन्ते। तस्माच्च स नरकः पद्म इत्युच्यते ॥

तत्र महापद्मेऽयं [3] विशेषः। भृशतरं व्यालोहितायमाना शतधा वा भूयो वा त्वचां स्फोटमापद्यन्ते। तस्माच्च स महानरको महापद्म इत्युच्यते ॥[4]

प्रत्येक[4]नरकेषु पुनरुत्पन्नाः सत्त्वा एवंरूपं प्रत्येकं प्रत्येकमात्मभावेषु स्वकर्मोपनिपाति दुःखं प्रत्यनुभवन्ति। तद्यथा लक्ष्मणेन पृष्टो मोद्गल्यायनो [5] विस्तरेणोदाहृतवान्यथासूत्रमेव। तस्माच्च स नरकः प्रत्येकनरक इत्युच्यते ॥

तत्र तिर्यञ्चोऽन्योन्यं विप्रघातिकां कुर्वन्ति यथा दुर्बलघातिकां। ततोनिदानं च दुःखं प्रत्यनुभवन्ति। अस्वतन्त्राश्च बाध्यन्ते[5] [6] ताड्यन्ते नुद्यन्ते। उपकरणभूताश्च भवन्ति देवमनुष्याणां। ततोनिदान[6]मपि[7] विचित्राणि [ २५ ख ] दुःखानि प्रतिसंवेदयन्ति ॥

प्रेताः पुन समासतस्त्रिविधा बहिर्भोजनपानकृतावरणा [7] अध्यात्मं भोजनपानकृतावरणा भोजनपानकृतावरणाश्च ॥

---

1 Our Xylograph has so thams thams , but Mahāvyutpatti, 4931, reads so tham tham pa.

2 Tib a chu. zer. ba See AK, III 59

3 Tib, tshig. du brjod las, MS *vāgvilāpa*.

4 Here are eight *Śīta Mahānarakas*, but sometimes there are ten, some of them with different names See Suttanipāta (Kokāliyasutta, 36), Samyutta Nikāya i. 152, and specially Ak, iii. p 154,

5 Tib gsod, MS *vāhyante*

6 So the MS.

२५ क, Tib. 45b. 7

तत्र बहिर्भोजनपानकृतावरणाः कतमे। ये सत्त्वा मात्सर्यस्याधिमात्रमासेवितत्वात्प्रेतायतन उपपन्नाः। ते च [Tib 46b 1] भवन्ति क्षुत्पिपासायोगात्संशुष्क[1]त्वङ्मांसशोणिता दग्धस्थूणाकृतयः [2] केशानुकारैर्मुखैः क्षुत्पिपासापरिगतवदनाः संशुष्कमुखा लेलिहमानजिह्वाः सम्भ्रान्तवदना-[2]स्तेन तेनान्वाहिण्डन्त्युत्ससरस्तडागेषु। तत्र चापरैरसिहस्तैः पाशहस्तैस्तोमरहस्तैः सत्त्वैस्तेभ्य उत्ससरस्तडागेभ्यो[3] निवार्यन्ते। तच्च पानीयं पूयशोणितं पश्यन्ति। तेन स्वयमेवापातुकामता सन्तिष्ठते। इम एवंरूपाः प्रेता बहिर्धाभोजन[3]पानकृतावरणाः ॥

अध्यात्मं भोजनपानकृतावरणाः [4] कतमे। तद्यथा सूचीमुखा उल्कामुखा गलगण्डकाश्च महोदराः। तथा हि ते स्वयमेव परैरकृतावरणा लब्ध्वापि भोजनपानं न शक्नुवन्ति भोक्तुं वा पातुं वा। [5] इम एवंरूपाः प्रेता अध्यात्मं भोजनपानकृतावरणाः ॥

भोजनपानकृतावरणाः कतमे। सन्ति ज्वालामालिनो[2] नाम प्रेता येषां भुक्तं भुक्तं पीतं पीतं सर्वमवदह्यते [6] येनैषां क्षुत्पिपासादुःखं न कदाचिद्[3]पैति ॥

सन्ति च प्रेता अवस्कर[4]भक्षा नाम य एकत्येऽमेध्यं भक्षयन्ति प्रस्रावं पिबन्ति। -यद्वाशुचि दुर्गन्धमामगन्धं प्रतिकूलं प्रतिक्रुष्टं तच्छक्नुवन्ति भक्षयितुं वा पातुं वा'। अप्येके स्वमांसमप्युत्कृत्य भक्षयन्ति। यत्तु भवति शुचि वा प्रणीतं वा तन्न शक्नुवन्ति भोक्तुं वा पातुं वा। इम एवंरूपाः प्रेता भोजनपानकृतावरणा इत्युच्यन्ते ॥

तत्र मनुष्येषूपपन्नाः [Tib. 47a 1] सत्त्वा एवंरूपं विघात[5]दुःखं प्रत्यनुभवन्ति। सहजं तावत्क्षुत्पिपासाविघातदुःखं। इच्छाविघातिकं

---

1 Tib bsags pa MS *vān*.

2 In the xylograph read me, lce for mi lce lit meaning *agni-jvālā* 'flame of fire.'

3 Omitted in Tib

4 This word means both excrement and dirt Here it is to be taken in the latter sense, Tib reading ljan. ljin.

5 Tib phons 'misfortune', 'poverty'.

कद्शनविघातदुःखं। औपक्रमिकं पर्येष्टि[2]परिश्रमादिविघातदुःखं ऋतुपरिणामिकं शीतोष्णविघातदुःखं। पारिस्राविकमगाराद्यनावरण[1]कृतं विघातदुःखं। [3] व्यवहारसमुच्छेदिकमन्धकाराद्यावरणकृतं विघातदुःखं। तथा परिभोग (?)[2]जरादुःखं व्याधिदुःखं मरणदुःखं। तथा हि नरकेषु मरण[4]मेव सुखं मन्यते। अतस्तत्र तन्[3] न दुःखं व्यवस्थाप्यते॥

देवेषु च मर्मच्छेदो नास्ति। अस्ति च च्यवनपतनदुःखं। यथोक्तं[4]। च्यवमानस्य देवपुत्रस्य पञ्च पूर्वनिमित्तानि प्रादुर्भवन्ति। असंक्लिष्टानि वासांसि [5] क्लिश्यन्ते। अम्लानपूर्वा माला म्लायन्ति। कक्षाभ्या स्वेदो मुच्यते। दौर्गन्ध्यं काये च क्रामति। स्व आसने देवो वा देवपुत्रो वा न रमते॥ तस्य तस्मिन्समये परिषण्डे[5] परि[ग][6]त[6]स्य ता अप्सरसस्तदन्यैर्देवपुत्रैः सार्धं परिचरन्ति। स ता[7] दृष्ट्वा ततो निदानं मह[द् ] [ २६क ] दुःखदौर्मनस्यं[8] प्रतिसंवेदयते। [9]तथा मद्ग [10]भावकृतमपि [7] दुःखं प्रत्यनुभवति। तत् कस्य हेतोः। तथा हि। तत्र यो विस्तीर्णतरेण पुण्यस्कन्धेन समन्वागतो भवति तस्य दिव्याः पञ्च कामगुणा उदारतराः प्रादुर्भवन्ति। तत्र तदन्येषां निकृष्टपुण्यतराणां [Tib. 47b. 1] देवपुत्राणां दृष्ट्वा मद्गुभावः सन्तिष्ठते। ततो निदानं विपुलं दुःखदौर्मनस्यं प्रतिसंवेदयति। तथा छेदनभेदनप्रवास(?वाध?)नघातक[11]दुःखमपि प्रत्यनुभवति। तत्कस्य हेतोः। तथा हि [2] देवासुरे संग्रामे प्रत्युपस्थिते अन्योन्यं देवा असुराश्च प्रतिविरुद्धाश्चतु-

---

1 Tib °*anārakṣana*° (ma. skyabs) for *anāvarana*°

2 MS *bheda.* Tib too is not so clear, reading lons. su hgyur. ba

3 Omitted in Tib 4 Jātaka, I 11.

5 Tib hkhor. gyi. nan du generally for *parisande*, 'a particular part of a house.' Tib. ban rim.

6 MS *paritasya(?)tā*, Tib. hdus. pa. lit. *saṃgatasya saṃnipatitasya* 7 de dag, MS taṃ.

8 See below, MS duhkham daurmanasyam, Tib sdug bsnal ba dag. yid. me bde. ba.

9 Tib adds. iti tṛtīyam iva(?) reading žes. gsum. pa lta buho.

10 For *manku*, as in Divyāvadāna, pp 633, l 24, and in Pali It is used also in the Satapatha Brāhmana. See below, p 90, l 15, *madgu*, a dialectical variation

11 Tib. bsad pa

२५ ख, Tib. 47a. 1

विंधान्यस्त्राण्यादाय सुवर्णमयानि रूप्यमयानि स्फटिकमयानि वैदूर्यमयानि संग्रामे संग्रामयन्ति। तत्र च देवानां वासुराणां वा [3] अङ्गप्रत्यङ्गच्छेदो भवति। कायभेदोऽपि भवति[1]। तेषामङ्गप्रत्यङ्गानि छिन्नानि पुनरपि जायन्ते। भिन्नश्च कायः पुनरपि विरोहति। यदा तु शिरश्छिन्नं भवति तदा वधमनुप्राप्नुवन्ति। [4] तत एकदा देवाः पराजीयन्ते एकदा असुराः [2]यद्भूयसा तु देवा जयन्ति प्रभूतवलतया। तयोर्यें पराजीयन्ते तेषां स्वं पुरं प्रविष्टानां[3] निर्वृतिः।[4] [5] न तेऽन्योन्यं पुनर्गम्या[5] भवन्ति। तत्र[6] देवाश्चासुरकन्यानामर्थेऽसुरैः सार्धं प्रतिविरुद्धाः। असुराश्चतुर्विधायाः सुधाया अर्थें देवैः सार्धं प्रतिविरुद्धाः। असुराश्च [6]देवगतिसंगृहीता एव द्रष्टव्याः। ते तु मायाविनो वञ्चनाभिप्राया मायाशाठ्यवहुलाः। अतो न तथा शुक्लधर्माणां भाजनभूतास्तद्यथा देवाः। अत एकदा [7] सूत्रान्तरेषु पृथग्गतिनिर्देशेन निर्दिष्टाः। [ते][7] सुरा एव समाना न सुरधर्ममादाय वर्तन्ते। तस्मादसुराः। वलवत्तरश्च देवपुत्रः [8]कुपितः समानो दुर्बलतरं देवपुत्रं [Tib 48a. 1] स्वस्माद्भवनात्प्रच्यावयति प्रवासयति। तस्माद्देवास्त्रिविधं दुःखं प्रत्यनुभवन्ति च्यवनपतनदुःखं मद्गुभावदुःखं छेदनभेदनवधप्रवासनदुःखं च॥

[ रूपारूप्यावचराः ]

[2]. रूपारूप्यावचराणां सत्त्वानां नास्ति सर्वश एव [9]तद्दुःखं। दुःखाया वेदनाया यस्मात्ते सत्त्वा न भाजनभूताः। अपि तु [3] दौष्ठुल्यदुःखेन तेऽपि दुःखिताः सक्लेशत्वात्सावरणत्वाच्च्युतौ स्थाने वास्वतन्त्रत्वात्। अनास्रवो धातुः सर्वदौष्ठुल्यदुःखसमुच्छिन्नः। [4] तस्मात्परमार्थतस्तदेव सुखं। सर्वमन्यद्दुःखं वेदितव्यं॥

---

1 Tib adds here gsod for bsod. (actually bsod.) pa yan. yod. do. (*vadho'pi bhavati*). 2 Tib does not support *yad*

3 Tib. zugs MS *pravistānam* So below.

4 Tib. adds *tatra praviśya* (der žugs nas)

5 According to Tib *dhrsyā* (tsugs) 'to be attacked'

6 MS adds here *anupravistāh* not supported by Tib See Note 4.

7 Tib. de dag. 8 Tib. adds here *ati-* (ches ).

9 Tib. de. dag, MS *tu* for *tad*

तत्र नरकेषु चतुर्विधेष्वपि सुखप्रतिसंवेदना नास्ति। यथा नरकेष्वेवं त्रिविधेषु[1] प्रेतेषु। [5] महर्धिकेषु[2] प्रेतेषु[3] मनुष्येषु च वहिर्मुखनिर्गत-[4]मुपकरणसुखं दुःखव्यतिकीर्णव्यतिमिश्रमुपलभ्यते॥

तत्र मनुष्येषु चक्रवर्तिसुखमग्रं श्रेष्ठं [6] प्रणीतं। चक्र[२६ख]वर्ती पुनर्लोक उत्पद्यमानः सप्तरत्नसमन्वागत उत्पद्यते। यस्येमान्येवंभूतानि सप्तरत्नानि भवन्ति। तद्यथा चक्ररत्नं [हस्तिरत्न][5]मश्वरत्नं मणि[7]रत्नं स्त्रीरत्नं गृहपतिरत्नं परिणायकरत्नमेव सप्तमं॥

कथंरूपमस्य तस्मिन्समये चक्ररत्नं सम्भवतीति यथासूत्रमेव [Tib 48b 1] सप्तानां रत्नानां प्रादुर्भावो वक्तव्यः॥

तत्र चातुर्द्वीपिकस्य कोट्टराजानः स्वयमेवोपनमन्ति। इमे देवस्य जनपदाः। तान्देव समनुशासतु[6]। वयं देवस्या[नु]यात्रिका[7] भविष्यामः। तत्र राजा चक्र[2]वर्त्याज्ञापयति। तेन हि यूयं ग्रामण्यः[8] स्वकस्वकविजितानि समनुशासत धर्मेण माधर्मेण। मा च वोऽधर्मचारिणो विषमचारिणो राष्ट्रे [3] वासो रोचेत[9]। त्रिद्वीपिकस्य दूतसम्प्रेषणेनोपनमन्ति। द्विद्वीपिकस्य व्युत्तिष्ठन्ते। आकलिताश्चोप[4]नमन्ति।

देवा पुनर्महतीं स्वर्गभूमिं प्रत्यनुभवन्ति वर्णवन्तो रतिबहुलाः रत्नेषु विमानेषु चिरस्थितयः। तेऽन्तर्बहिःकायेन शुचयो निरामगन्धाः। [5] तेषां यान्यशुचिद्रव्याणि। तद्यथा रजो मलमस्थिस्नायुशिरावृक्काहृदयादीनि[10] तद्यथा मनुष्याणां। तानि न भवन्ति। चतुर्विधानि च तेषां विमा-

---

1 Not in Tib

2 Tib rdsu hphrul chen po MS *-tsvetam* (apparently for *-sv evam*) *adhikesu*.

3 Tib. yi. dags, MS *tiryaksu*

4 ? Tib phyi. rol. du bltas. pa las. byun pahi.

5 Tib. glan. po rin. po. che. See Mahāvyutpatti, CLXXXII, 9-16, Dīgha Nikāya, I. 89

6 So the MS.

7 Tib. rjes su. mchig. lags. so, for mchig lags (?) one may expect gcod pa

8 Lit for this Tib is gion. gi bdag, but in our text it has gtso. bo dag, for which Skt has *mukhyāh* 'chiefs'.

9 Tib has, however, ma gźug śign (?)

10 MS *-dayah*

२६ क, Tib. 47a. 5

नानि भवन्ति। सुवर्णमयानि रूप्य[6]मयानि स्फटिकमयानि वैदूर्यमयानि। नानाभक्तिविचित्रितानि कूटागाररमणीयानि हर्म्य (?)[1]रमणीयकानि हर्म्य[2]रमणीयकानि वेदिकारमणीयकानि [7] जालवातायनरमणीयकानि नानामणिप्रत्यर्पिता[3]न्यामुक्तावभासानि समन्ततो भान्ति॥

तथा भोजनवृक्षा यतो भोजनं चतुर्विधा सुधा [Tib 49a. 1] निर्वर्तते। नीला पीता लोहितावदाता। एवं पानवृक्षा यतो मधुमाधवं[4] पानं[5] निर्वर्तते। यानवृक्षा यतो [2] विचित्राणि यानानि निर्वर्तन्ते रथयुग्म[6]शिविकाप्रभृतीनि॥ वस्त्रवृक्षा यतो विविधानि वस्त्राणि सूक्ष्माणि [स्थूलानि][7] शुक्लानि नानाविधरङ्गाणि सुवर्ण[3]भक्तिविचित्रितानि प्रादुर्भवन्ति। अलङ्कारवृक्षा यतो विविधा अलङ्कारा निर्वर्तन्ते मणयः केयूराः कुण्डलानि हर्पा(ः) [8]कटका हस्ताभरणानि पादाभरणानि। एव[4]म्भागीया विचित्रा अलङ्कारा विचित्रमणिप्रत्यर्पिताः[9] प्रादुर्भवन्ति॥ गन्धधूपमाल्यवृक्षा यतो विचित्रा गन्धा विविधा धूपा विविधानि माल्यानि। [5] येषां पारियात्रकः कोविदारोऽग्रः श्रेष्ठो वरः प्रणीतः। तस्य पञ्च योजनानि मूलाभिनिवेशः[10]। योजनशतमुच्चः। अशीतियोजनानि शाखापत्र[6]पलाशं स्फरित्वा तिष्ठति। तस्य सर्वपरिफुल्लस्य योजनशतमनुवातं गन्धो वाति। पञ्चाशद्योजनानि प्रतिवातं। तस्य चाधस्ताद्देवास्त्रयस्त्रिंशाश्चतुरो वार्षिका[11]न्मासान् [7] दिव्यैः

---

1 MS *tiha*. Tib ba. gam which means a 'dome' on the top of a house The Skt. word *aṭṭāla* 'watch-tower' and *harmya* are used for it. See the next word in the text.

2 For *harmya* Tib. has bsil. khan lit. *hima-* or *śītala-gṛha* 'cool house'.

3 Tib lit. *maṇigaṇakhacitāni*. (nor. buhi. tshogs kyis. spras. śin See below (Tib 49a. 4).

4 Here *mādhava* means *madhu-*, *madya* (Tib. sbran. chan) 'intoxicating drink from honey'.

5 Omitted in Tib

6 Tib. khyogs. gyogs 'covered palanquin' (dolā).

7 Tib che. son.

8 A kind of neck ornament, हॉडलि (?)

9 See Tib. 48b 7.

10 Tib. omits *abhiniveśa*

11 Here according to Tib. *vārṣika* means 'of the year'

२६ ख, Tib 48b. 5

पञ्चभिः कामगुणैः क्रीडन्ति॥ तथा हास्यनृत्यगीतवादितवृक्षा यतो हास्य[नृत्य][1]गीतवादितानां विचित्राणि भाजनानि [ २७ क ] निर्वर्तन्ते॥ तथा [ Tib 49b 1 ] भाण्डोपस्करवृक्षा यतो विचित्रा भाण्डोपस्करा निर्वर्तन्ते। तद्यथा [ भोजन ][2]भाण्डोपस्करः पानभाण्डोपस्करः शयनासनभाण्डोपस्कर इत्येवम्भागीयो भाण्डोपस्करः। [2] तेषां यथेप्सितं यथाकर्म तान्युपकरणान्युपभोक्तुकामाना हस्ते प्रादुर्भवन्ति॥

तत्सदृशो[3]विमानविभूतिसुखपरिभोगश्चासुराणामपि [3] वेदितव्यः॥

उत्तरेषु पुनः कुरुष्वेवंरूपा एव वृक्षा कल्पवृक्षा इत्युच्यन्ते। यतस्ते वृक्षादेव स्वयं गृह्णन्ति नो तु चिन्तितं हस्ते सन्तिष्ठते। अकृष्टोप्तश्च तत्र शालिः। अममाश्च ते [4] सत्त्वा अपरिग्रहा नियतं च विशेषगामिनः॥

तत्र च शक्रस्य देवेन्द्रस्य सर्वश्रेष्ठो वैजयन्तः प्रासादो [5] यत्रैकविंशति[4]-निर्यूह[5]शतं। निर्यूहे निर्यूहे कूटागारशतं। कूटागारे कूटागारे सप्ताववरकाः[6]। अववरकेऽववरके सप्ताप्सरसः। अप्सरसोऽप्सरसः सप्त [सप्त][7] परिचारिकाः॥

सर्वश्च भूमिभागो देवानां [ 6 ] पाणितलसमो[8] नोत्कूलनिकूलः[9] स्पर्शक्षमश्च। निक्षिप्ते पादे स नमति। उत्क्षिप्ते पादे उन्नमति। जानुमात्रं च नित्यकालं मन्दारकैः[10] पुष्पैरवकीर्णस्तिष्ठति। तत्र पुराणानि पुष्पाणि [7] वायुरपहरति। नवानि पुष्पाण्युपसंहरति॥

---

1 Tib gar

2 Tib kha zas,

3 Tib de dan. hdra. bar, MS *tadanusadṛśair.*

4 MS *ekaviṃśatam*

5 A kind of turret.

6 Tib khan. mig Generally *avavaraka* is found as *apavaraka* 'an inner apartment'.

7 Tib. bdun bdun

8 After *devānām* MS reads *samaḥ* and has *pāṇi° jātaḥ* for *pāṇi° tala-samaḥ,* for which Tib has lag. mthil bźin du. mñam.

9 In such cases *kūla* means 'declivity, slope'. In Xylograph read mtho. dman for mthon dman

10 Tib and Buddhist Skt *mandārava* for *mandāraka.*

२६ ख, Tib 49a. 7

तस्याश्च देवपुर्याश्चतुर्दिशं वीथ्योऽभिरूपा दर्शनीया [ Tib 50a 1 ] [विचित्राः][1] सुमापिताः। चत्वारि च चतुर्दिशं द्वाराणि मापितान्यभिरूपाणि दर्शनीयानि प्रासादिकानि विचित्राभिरूपप्रभूतपक्षाधिष्ठितानि।[2] चत्वारि चोद्यानानि चतुर्दिशमेव। तद्यथा चैत्ररथं पारुषकं[3] मिश्रकं नन्दनवनं च। ततः परेण चतस्रः सौभूमयोऽभिरूपा दर्शनीयाः प्रासादिकाः [2] उत्तरपूर्वेण च देवपूर्याः सुधर्मा देवसभा यत्र देवाः प्रविश्यार्थं चिन्तयन्ति तुलयन्त्युपपरीक्षन्ते। तस्य च सामन्तकेन पाण्डुकम्बलशिला श्वेताभिरूपा दर्शनीया [3] प्रासादिका। ते च देवाः स्वयंप्रभाः। तेषां रात्रिनिमित्तानि प्रादुर्भवन्ति। यतस्तेषामेवं भवति प्रत्युपस्थिता रात्रिर्निर्यातो दिवसः। तद्यथालस्यं पञ्चभिः कामगुणैरक्रीडितुकामता स्त्यानमिद्धं। शकुनयश्च [4] न निकूजन्त इत्येवंभागीयानि निमित्तानि॥

ते रात्रिं दिवसान्येकान्तसुखसौमनस्यसमर्पिता दिव्यैः पञ्चभिः काम- [5] गुणैः रममाणा एकान्तप्रमादवशगा नृत्यशब्दै[र्गीतशब्दै][4]र्वादितशब्दैर्नटनर्तकहासकलासक[5]शब्दैः। [ 6 ]विचित्रैश्च रूपदर्शनैरेकान्तमनोज्ञैः। विचित्रैश्च गन्धैरेकान्तसुरभिभिः। विचित्रैश्च रसैरेकान्तस्वादुभिः। विचित्रैश्च स्प्रष्टव्यैरप्सरःप्रधानै[ 7 ]रेकान्त-[२७ख]सुखस्पर्शैरपहृतमानसाः कालमतिनामयन्ति। इदमेवंरूपं देवाः सुखं प्रत्यनुभवन्ति। न च तेषां व्याधिर्न परिभेदो न जरोप[6]लभ्यते। न च सहजं [ Tib. 50b. 1 ] दुःखं भोजनपानविघातकृतं। नापि तदन्यानि [7]दुःखानि पूर्ववत्तद्यथा मनुष्येषु॥

[रूपावचराः]

रूपावचरा देवाः प्रथमध्यानभूमिका विवेकजं प्रीतिसुखं प्रत्यनुभवन्ति। द्वितीयध्यानभूमिकाः [ 2 ] समाधिजं प्रीतिसुखं प्रत्यनुभवन्ति। तृतीय-

---

1 Tib. rnam. pa. sna. tshogs.

2 Tib. omits *dvārāṇi° dhisthitāni*

3 Mahāvyutpatti has Pārusakā (v. l *Pārusya*) and *Miśraka* (4196 and 4195) respectively.

4 Tib. gluhi. sgra rnams. 5 Tib. hjo. sgeg.

6 Tib omits *upa°*

7 MS adds here *vighāta-*

२७ क, Tib. 49b. 7]

ध्यानभूमिका निष्प्रीतिकं सुखमण्डं[1] प्रत्यनुभवन्ति। चतुर्थध्यानभूमिका उपेक्षास्मृतिपरिशुद्धं शान्तं[2] सुखं प्रत्यनुभवन्त्यानिञ्जं॥

[आरूप्यावचराः]

[ 3 ] आरूप्योत्पन्ना[ः] शान्तविमोक्षिकं सुखं प्रत्यनुभवन्ति। अपि खलु षड्भिर्विशेषैः[3]र्दुःखविशेषो वेदितव्यः सुखविशेषो वा। परिमाणविशेषेण सौकुमार्यविशेषेण प्रत्ययविशेषेण कालविशेषेण चित्तविशेषेण आश्रयविशेषेण च। यथा यथा सुकुमारतरः[4] कायो[5] भवति तथा तथा दुःखविशेषो भवति। यथा यथा सुकुमारतर आश्रयो भवति तथा तथा दुःखविशेषो भवति[6]। यथा यथा प्रत्ययास्तीव्रतराः [ 4 ] प्रचुरतरा विचित्रतरा भवन्ति तथा तथा दुःखविशेषो भवति। यथा यथा कालो दीर्घतरो निरन्तरश्च भवति तथा तथा दुःखविशेषो भवति। यथा यथा प्रतिसंख्यानबलिकतरं[7] चित्तं [ 5 ] भवति तथा तथा दुःखविशेषो भवति। यथा यथाश्रयो[8] दुःखभाजनभूततरो भवति तथा तथा दुःखविशेषो भवति॥

यथा दुःखविशेष एवं सुखविशेषोऽपि विस्तरेण यथायोगं वेदि[ 6 ]तव्यः॥

अपि खलु द्विविधं सुखमनार्यधनजमार्यधनजं च। तत्रानार्यधनजं सुखं यच्चत्वार्युपकरणानि प्रतीत्योत्पद्यते[9]। तुष्ट्युपकरणं पुष्ट्युपकरणं[10] [7] शुद्ध्युपकरणं स्थित्युपकरणं च॥

---

1 So the MS For *manda* Tib, which is very indistinct here, seems to read smin po, but according to Skt. we want here sñin po. The word *manda* may be taken here in the sense of *sāra* 'pith'.

2 Tib. ži baḥi.

3 Here Tib. text seems to be defective, after °*viśesaiḥ* there being only *parimānaviśesena* (tshad kyi. bye. brag dan).

4 The word °*taraḥ* (Tib. śin. tu) is omitted in MS.

5 Tib. lit. *māmsa* (śa).

6 This sentence is omitted in Tib.

7 Tib so. sor ma brtags. śin. tu. stobs.

8 Tib lit *dehaḥ* (lus).

9 Tib brten. nas byun baho.

10 Tib. reading lta baḥi. yo. byad suggests *dṛstyupa*°. Note on p 96, l 4 the MS has *pustyupa*° and not *tustyupa* as printed.

२७ ख, Tib. 50b. 2

तत्र तुष्ट्युपकरणं। तद्यथा यानं[1] वस्त्रमलङ्कारो हास्यनृत्यगीतवादितं गन्ध[2]माल्यविलेपनं विचित्रप्रणीतभाण्डोपस्करता [Tib 51a 1] आलोकस्त्रीपुरुष[3]परिचर्या कोशसन्निधिश्च ॥

तत्र तुष्ट्युपकरणं। तद्यथा आनन्द[4]व्यायाम[ः] शिलाचक्रव्यायाम[ो] गदाचक्रव्यायाम [2] इत्येवंभागीयं ॥

तत्र शुद्ध्युपकरणं। तद्यथा दर्भ[5]शङ्खबिल्वं पूर्णकुम्भ इत्येवंभागीयं ॥

तत्र स्थित्युपकरणं भोजनं पानं ॥[6]

तत्रार्य[3]धनजं सुखं यत्सप्तार्याणि धनानि प्रतीत्योत्पद्यते श्रद्धाधनं शीलधनं ह्रीधनमपत्राप्यधनं श्रुतधनं त्यागधनं प्रज्ञाधनं ॥

तत्र [4] पञ्चदशभिराकारैरनार्यधनजात्सुखादार्यधनजं सुखं विशिष्यते। कतमैः पञ्चदशभिः। अनार्यधनजं सुखं दुश्चरितसमुत्थानाय [5] भवति। आर्यधनजं तु न तथा[7]। पुनरनार्यधनजं सुखं सावद्यरतिसम्प्रयुक्तं [आर्यधनजं [6] त्वनवद्यरतिसम्प्रयुक्तं।][8] पुनरनार्यधनजं सुखं परीत्तमकृत्स्नाश्रयव्यापितया। आर्यधनजमुदारं [२८क] [7] कृत्स्नाश्रयव्यापितया। पुनरनार्यधनजं न सार्वकालिकं बहिःप्रत्ययाधीनतया। आर्यधनजं तु सार्वकालिकमध्यात्मप्रत्ययाधीनतया। पुनरनार्यधनजं [Tib. 51b. 1] न सार्वभूमिकं कामावचरत्वादेव। आर्यधनजं पुनः सार्वभूमिकं त्रैधातुकाव-

---

1 Tib not clear.

2 Tib adds here *-puṣpa-* (me. tog.).

3 According to Tib we are to take here *dvandva* or co-ordinative compound with these three words.

4 Tib though here not legible seems to read dgah ba. la ; MS *atarkhā*, it cannot be explained

5 Tib adds here *-dūrvā-* which is transliterated.

6 In Tib. here ends Bam. po V.

7 For *na tathā* Tib reads *sucaritasamutthāpanāya bhavati* (legs par. spyod. par. kun. nas. slon ba. yin. no).

8 Tib. hphags. pahi nor. las. byun, ba. la. ni. kha na ma. tho. ba. med. la. dgaḥ. ba. daṅ. ldan. pa. yin. no.

२७ ख, Tib. 50b. 7

चरमप्रतिसंयुक्तं च ॥ पुनरनार्यधनजं [2] नायत्या[म्] आर्यानार्यधनावाहकं[1] आर्यधनजं त्वायत्यामार्यानार्य[2]धनावाहकं ॥ पुनरनार्यधनजमुपभुज्यमानं [3] परिक्षयं पर्यादानं गच्छति । आर्यधनजं तु निषेव्यमाणं [3]पृथु[4]वृद्धिवैपुल्यतां गच्छति ॥ पुनरनार्यधनजं परैराच्छेद्यं राजभिर्वा चौरैर्वा प्रत्यर्थिभिर्वाग्निना वोदकेन वा । [4] आर्यधनजं त्वनाच्छेद्यं ॥ पुनरार्यधनजमित आदायागमनीयं । आर्यधनजं पुनरित आदाय गमनीयं ॥ [5] पुनरनार्यधनजं निषेव्यमाणं न तृप्तये[5] भवति । आर्यधनजं तु निषेव्यमाणं निष्ठा[6]गमनतस्तृप्तये भवति ॥ पुनरनार्यधनजं सभयं [6] सवैरं सोपद्रवं सपरिदाहं । न चायत्यां दुःखप्रहाणाय भवति ॥ तत्र सभयमनागताया दुःखोत्पत्तेराशङ्कापदस्थानभूतत्वात् । [7] तत्र सवैरं कलहभण्डनविग्रहविवादस्थानभूतत्वात् । सोपद्रवं व्याधिजरामरणपदस्थानभूतत्वात् । तत्र सपरिदाहं [Tib. 52a. 1] कुष्ठव्याधिकण्डूवद्[7]परिनिष्पन्नसुखतया विपर्यासपदस्थानभूतत्वाच्छोकपरिदेवदुःखदौर्मनस्योपायासपदभूतत्वाच्च । [2] तत्र नायत्यां दुःखप्रहाणाय रागादिक्लेशोपक्लेशपदस्थानभूतत्वात् ॥ आर्यधनजं त्वभयमवैरमनुपद्रवमपरि[3]दाहकरमायत्यां दुःखप्रहाणाय । एतद्विपर्ययेण विस्तरेण यथायोगं वेदितव्यं ॥ अपि खलु पञ्चभिराकारैर्बाह्यात्कामिनां कामपरिभोगादार्याणां प्रज्ञाजीविनां धर्मपरिभोगो [4] विशिष्यते येनार्यः प्रज्ञाजीव्यनुत्तर[ा]ं प्रज्ञाजीविकां[8] जीवतीत्युच्यतेऽसंक्लिष्टत्वाद्धर्म-

---

1 So the MS here and below. Tib. reads thob. pa. byed. pa. which suggests *prāpaka* and thus supports *vāhaka*

2 Tib. omits here *ārya*.

3 Tib. che. ba. MS *pṛtha-*

4 Tib. puts it after *udakena* which follows.

5 Tib. lit. *paryāptijñānāya* (chog. śes. pa ). For *tṛpti* in Tib. we have noms. pa, or tsim. pa.

6 Tib. mthah generally meaning *anta*.

7 For *-vad* ( Tib. bžin. du ). MS *-pada*. For *kuṣṭha-* in Tib. generally we have mdze, or ru-ta, but our Xylograph here appears to read mi. hdze, For *kaṇḍū* generally gyan. pa. in Tib. there is prugs. pa (?) which has no meaning.

8 MS *°jīvikānam*

२८ क, Tib. 51b. 1

परिभोगस्यात्यन्तिकत्वाद्धर्मपरिभोगस्यैकान्तिकत्वाद्धर्मपरिभोगस्या [5] साधारणत्वात्तदन्यैः प्रज्ञाजीविभिर्धर्मपरिभोगस्य परिनिष्पन्नसुखत्वान्निहतमारप्रत्यर्थिकत्वाच्च धर्मभोगस्य ॥

तत्र कामिनां कामसुखं [6] सौमनस्यस्थानीयमनुनयानुगतं दौर्मनस्यस्थानीयं प्रतिघानुगतमुपेक्षास्थानीयमप्रतिसंख्यायो[1]पेक्षानुगतं। नतु तथार्थप्रज्ञाजीविनां धर्म[2]परिभोगः ॥

[7] पुनरपरं कामिनां कामोपभोगस्य पूर्वा कोटी न प्रज्ञायते। अनित्यतयान्यान्कामांस्त्यजन्त्यन्यान् कामाल्लँभन्ते। एकदा च न लभन्ते। न तु तथार्थप्रज्ञाजीविनां धर्मोपभोगः [Tib. 52b. 1] पुनरपरं कामिनां[3] कामोपभोगे वर्तमानानां तदेव वस्त्वेकत्यानां सौमनस्यस्थानीयं भवति। [२८ ख] तदेवैकत्यानां दौर्मनस्यस्थानीयानि वा। पुनः किञ्चित्कालं सौमनस्यस्थानीयानि भवन्ति। [2] किञ्चित्कालं दौर्मनस्यस्थानीयानि। न तु तथार्थप्रज्ञाजीविनां धर्मोपभोगः ॥ पुनरपरं [इतो बाह्यानां][4] संत्यक्तकामानां[5] प्रज्ञाजीविनां तेषु तेषु[6] दृष्टिगतेषु [3] स्वविकल्प[7]समुत्थापितेषु मिथ्याधिमुक्तिपदेषु स्थामशः परामृश्याभिनिविष्टचेतसां सकामसंक्लेशोऽनुषक्त एव भवति। वीतरागाणामपि [4] पुनः प्रत्युदावृत्तिर्भवति। नतु तथार्थप्रज्ञाजीविनां धर्मोपभोगः ॥ पुनरपरं [8]धर्मोपभोगिनां तद्वीतरागाणां च लौकिकानामपि परिनिष्पन्नं कामसुखं विवेक [5] सुखं च भवति। मारप्रत्यर्थिकानुगतं च मायोपमं प्रतिश्रुत्कोपमं प्रतिबिम्बोपमं मरीचिकोपमं स्वप्नोपमं मायाकृतालङ्कारोपमं च यत्सुखं

---

1 For apratisaṃkhyāya Tib so sor brtags pa ma yin. pa which clearly suggests apratisaṃkhyā, while apratisaṃkhyāya is doubtful

2 In Tib *dharma* (chos) is omitted

3 Tib. *kāminām* (hdod. pa can), MS *kāmikā*.

4 Tib. hdi. las phyi rol pahi

5 Tib. hdod pa. kun. nas spans. pa. rnams. ni

6 These two words are not supported by Tib

7 Tib, ran gi rtog

8 Tib. *kāma-* (hdod. pa. la) for *dharma*.

२८ क, Tib. 52a. 4

[तद्][1] बालाः कामोप[6]भोगिनो लौकिकवीतरागाश्चोन्मत्तकोपमाः प्रतिनिषेवन्ते। मत्तकाद्युपमाश्च निर्जितमारसंग्रामाश्च परिभुञ्जते। तस्मादपरिनिष्पन्नश्च भवति अनिर्हितमारप्रत्यर्थिकश्च। [7]नतु तथार्यप्रज्ञाजीविनां धर्मोपभोगः॥

अपि खलु कथं त्रैधातुकावचराणां सत्त्वानामाश्रयो द्रष्टव्यः। तद्यथा सपरिदाहो गण्डो दौष्ठुल्यानुगतत्वात्॥ कथं तस्मिन्नाश्रये सुखवेदनोपनिपातो [Tib. 53a 1]द्रष्टव्यः। तद्यथा सपरिदाहे गण्डे शीतसंस्पर्शोपनिपातः॥ कथं तस्मिन्नाश्रये दुःखवेदनोपनिपातो द्रष्टव्यः। तद्यथा [2] सपरिदाहे गण्डे क्षारोपनिपातः। कथमस्मिन्नाश्रयेऽदुःखासुखवेदनोपनिपातो द्रष्टव्यः। तद्यथा तस्मिन्नेव सपरिदाहे गण्डे शीतक्षारविनिर्मुक्तप्रकृतिपरिदाहः॥ अत एव भगवता सुखा वेदनापि[2] परिणामदुःखतया दुःखेत्युक्ता। दुःखाः पुनर्दुःखा दुःखतया। [3]अदुःखसुखा वेदना संस्कारदुःखतया दुःखेत्युक्ता॥

यदप्युक्तमस्ति सामिषा प्रीतिः। अस्ति निरामिषा निरामिषतरा निरामिषतमा[4]प्रीतिरिति। तदपि यथासूत्रमेव विस्तरेण वेदितव्यं धातुद्वय[3]-पतितं॥

यत्पुनर्भगवता संज्ञावेदयितनिरोधसुखं सुखानामग्रत्वेन व्यवस्थापितं तद्विहारसुख[5]मभिसन्धाय नो तु वेदयितसुखं॥

यदप्युक्तं त्रीणि सुखानि रागविरागो द्वेषविरागो मोहविराग इति। तान्येतानि [6]त्रीणि दुःखान्यनास्रव एव धातावुपलभ्यते[4]॥

तस्मादेभिस्त्रिभिस्त्रिभिः सुखैर्नित्यकालं सुख एवानास्रवो[२९क] धातुः॥

[ आहारपरिभोगः ]

तत्रायमाहारपरिभोगः। तद्यथा जातानां भूतानां त्रैधातुकावचराणां [7] सत्त्वानां चतुर्भिराहारै[5]र्यावदायुःस्थितिर्भवति। यावता तत्र त्रिभिराहारैः[6] स्पर्शेन

---

1 Tib de. la.

2 MS °vi.

3 Tib. gñis, but it is not clear.

4 Tib *vidyate* (yod. de).

5 Tib. zas. rnam. pa. bźi. po. rnams. kyis. MS *caturbhirākārair.*

6 Tib, zas. rnam. pa. gsum gyis MS *°ākāraih.*

२९ क, Tib. 52b. 5

मनः[1]सञ्चेतनया न सर्वेषां त्रैधातुकावचराणां सत्त्वानां स्थिति [Tib. 53b. 1]-र्भवति। कवडीकारेण पुनः कामावचराणामेव सत्त्वानां स्थितिर्भवति। यावता तत्र नरकोपपन्नानां सत्त्वानां सूक्ष्मः कावडीकाराहारगर्भो वायुर्वाति। येन तेषां स्थितिर्भवति। यावता तिरश्चां प्रेतानां [2] मनुष्याणां चौदारिक आहारो यं ते कवडीकृत्य भक्षयन्ति। य एव पुनः सूक्ष्मकललादिगतानां सत्त्वानां देवानां च कामावचराणां। तथाहि। तेषां भुक्तमात्र एव कवडीकार [3] आहारः काये सर्वाङ्गेष्वनुविसर[2]ञ्जरामापद्यते। न च तेषामुच्चारप्रस्रावः सन्तिष्ठते॥

[ मैथुनपरिभोगः ]

तत्रायं मैथुनपरिभोगो नारकाणां सत्त्वानां सर्वेण सर्वं नास्ति। तथा हि ते [4] तीव्रं च दुःखं प्रत्यनुभवन्ति विचित्रञ्च दीर्घं च निरन्तरं च। ततश्च तेषां पुरुषाणां स्त्रीषु स्त्रीच्छन्द एव नोत्पद्यते। स्त्रीणां च पुरुषे पुरुषच्छन्द एव नोत्पद्यते। कुतः पुनरन्योन्यं द्वय[5]समापत्तिं समापत्स्यन्ते॥ तिर्यक्षु प्रेतेषु मनुष्येषु सुखदुःखव्यतिकीर्णत्वादाश्रयाणा[3]मस्ति मैथुनयोगः[4]। ते चान्योऽन्यं स्त्रियश्च पुरुषाश्च द्वयद्वयं समापद्यन्ते। अशुचि च मुञ्चन्ति। [6] देवानां कामावचराणामस्ति मैथुनसंयोगो नो चाशुचिनिर्मोक्षः। निर्गच्छन्वायुरेव निर्गच्छतीन्द्रियद्वारेण। तत्र चातुर्महाराजकायिकानां द्वयद्वयसमापत्त्या दाहो विगच्छति[5]। यथा चातुर्महाराजकायिकाना[7]मेवं त्रायस्त्रिंशानां यामानामन्योन्यं परिष्वजनमात्रकेण दाहो विगच्छति। तुषितानामन्योन्यं परिग्रहणमात्रकेण दाहो विगच्छति। निर्माणरतीना[Tib. 54a. 1]-मन्योन्यं हसितमात्रकेण दाहो विगच्छति। परनिर्मितवशवर्तिनामन्योन्यं चक्षुषा चक्षुरुपनिध्याय निरीक्षितमात्रकेण दाहो विगच्छति। तत्र त्रिषु

[ दारपरिग्रह आवाहविवाहश्च ]

द्वीपेषु जम्बूद्वीपे [2] पूर्वविदेहेऽवरगोदानीये[6] च दारपरिग्रह आवाह-

1 Tib. yid. la sems. pa. dan.

2 Tib son nas lit. *gatvā*, MS *anuvisar*°

3 Here *āśraya* implies *deha* 'body', Tib. lus.

4 MS indistinct, Tib. sbyor. ba.

5 See AK, III. $69^{b-d}$ kāmabhujas tu sat। dvandvāliṅganapāṇyāptihasitekṣaṇamaithunāḥ॥ See here also Poussin's note.

6 Ak. iii, 2, 145.

विवाहश्च[1] प्रज्ञायते। उत्तरेषु कुरुष्वममत्वादपरिग्रहत्वात्तेषां सत्त्वानां नास्ति दारपरिग्रहो नावाहविवाहः। [3]यथा त्रिषु द्वीपेष्वेवं प्रेत[नर]केषु कामावचरेषु च देवेषु। स्थापयित्वा निर्माणरतीन्परनिर्मितवशवर्तिनश्च देवान् कामावचरेषु देवनिकायेषु[4] नाप्सरसां गर्भः सन्तिष्ठते। चातुर्महाराजकायिकानामंसे वोत्सङ्गे वा मातापित्रोः पञ्चवर्षको वा दारक औपपादुकः सम्भवति[2] त्रायस्त्रिंशकानां षड्वर्षको वा यामानां [5] सप्तवर्षको वा तुषितानामष्टवर्षको [२९ ख] वा निर्माणरतीनां नववर्षको वा परनिर्मितवशवर्तिनां दशवर्षको वा दारकोऽंसे वोत्सङ्गे वौपपादुकः सम्भवति।[3]

[ उपपत्तिप्रज्ञप्तिव्यवस्थानं ]

[6]तत्रेदमुपपत्तिप्रज्ञप्तिव्यवस्थानं। तिस्रः कामोपपत्तयः[4]। सन्ति सत्त्वाः प्रत्युपस्थितकामा ये प्रत्युपस्थितैः कामैरैश्वर्यं वशे वर्तयन्ति। ते पुनः कतमे।[7] तद्यथा। सर्वे मनुष्याश्चातुर्महाराजकायिकाश्च देवानुपादाया च तुषितेभ्यः। इयं प्रथमा कामोपपत्तिः॥[5]

सन्ति सत्त्वा निर्मितकामा ये निर्माय निर्माय कामाकामानैश्वर्यं वशे वर्तयन्ति। [54b. 1] ते पुनः कतमे। तद्यथा देवा निर्माणरतयः। तेषां च निर्माण-

1 Ak, iv. 166. See the other references given there. Here Yaśomitra says (Wogihara, p. 409) āvāho dārikāyā dārakagrhāgamanam. vivāho dārakasya dārīkāgrhāgamanam. The two words mean in fact the marriage of a son and daughter respectively See Dīghanikāya. i 99, on *āvāhana* and *vivāhana* , Sumangalavilāsinī, i 96· āvāhanam nāma imassa dārakassa asukakulato asukanakkhattena dārikam ānethathāti āvāhakaranam vivāhanan'ti imam dārikam asukassa nāma dārakassa asukanakkhattena detha, evam assā vuddhi bhavissatiti.

2 See Lokaprajñapti (Cosmologie buddhique p. 300 as quoted by Poussin, Ak, iii. 164-5.

3 AK. III. 70ᵃ-ᶜ pañcavarasopamo yāvad daśavarsopamah śiśuh I sambhavaty esu II

4 AK. III 71a-b. kāmopapattayas tisrah kāmadevāh samānusāḥ. Itivuttaka, 94 tisso imā bhikkhavo kām'upapattayo katamā tisso? pacc'upatthitakāmā nimmānaratino paranimmitavasavattino, Dīgha. iii. 218.

5 Dīgha Nikāya, iii. 218. santā'āvuso sattā pacc'uupatthitakāmā. te paccupatthitesu kāmesu vasam vattenti. seyyathāpi manu ssā-ekacce ca devā ekacce ca vinipātikā. ayaṃ paṭhamā kām'supapatti.

२९ क, Tib. 54a. 2

रतीनां देवानामात्मनिमित्तं कामनिर्माणं समृध्यति। न परनिमित्तं। ततस्ते स्वनिर्मितैरेव कामैरैश्वर्यं वशे वर्तयन्ति। इयं द्वितीया कामोपपत्तिः ॥[1]

सन्ति सत्त्वा परनिर्मितकामा ये परनिर्मितैरपि कामैरैश्वर्यं वशे वर्तयन्ति। तद्यथा देवाः परनिर्मितवशवर्तिनः। [2] तथा हि तेषां देवानामात्मनिमित्तमपि निर्माणं समृध्यति परनिमित्तमपि। ततस्ते [3] स्वनिर्माणेऽल्पोत्सुकविहारिणः परिनिर्मितैः कामैरैश्वर्यं वशे वर्तयन्ति। येन ते परनिर्मितवशवर्तिन इत्युच्यन्ते। न तु ते परनिर्मितानेव कामान्निषेवन्ति अपि तु [4] स्वनिर्मितानपि। इयं तृतीया कामोपपत्तिः ॥[2]

[ सुखोपपत्तिः ]

तिस्र इमाः सुखोपपत्तयः[3]। सन्ति सत्त्वा ये विवेकजेन प्रीतिसुखेन काममभिष्यन्दयन्ति। तद्यथा देवाः प्रथमध्यानभूमिकाः। [5] इयं प्रथमा सुखोपपत्तिः ॥

सन्ति सत्त्वा ये समाधिजेन प्रीतिसुखेन काममभिष्यन्दयन्ति। तद्यथा देवा द्वितीयध्यानभूमिकाः इयं द्वितीया सुखोपपत्तिः ॥[4]

सन्ति सत्त्वा ये निष्प्रीतिकेन सुखेन [6] काममभिष्यन्दयन्ति तद्यथा देवास्तृतीयध्यानभूमिकाः। इयं तृतीया सुखोपपत्तिः ॥[5]

केन कारणेन तिस्रः कामोपपत्तयः। तिस्रश्च सुखोपपत्तयो व्यवस्थापिताः ॥

---

1 Dīgha Nikāya, iii. 218 sant' āvuso sattā nimmitakāmā te nimmetvā nimmetvā kāmesu vasam vattenti. seyyathâpi devā nimmānartī. ayam dutiyā kām'upapatti.

2 Dīgha Nikāya, iii 218 sant' āvuso sattā paranimmitakamā te paranimmitesu kāmesu vasam vattenti. seyyathāpi devā paranimmitavasavattī. ayam tatiyā kām'upapatti.

3 AK, III. 71° .sukhopapattyas tisro navatridhyānabhūmayah. Dīgha iii. 218 sant'āvuso uppādetvā uppādetvā sukhaṁ viharanti. seyyathāpi devā Brahmakāyikā. ayam pathamā sukh'upapatti.

4 Dīgha., iii. 218.sant' āvuso sattā sukhena abhisannā parisannā paripūrā paripphutā. te kadāci karahaci udānam udānenti 'aho sukham aho sukham' ti.

5 Dīgha., iii. 218: sant' āvuso sattā sukhena abhisannā parisannā paripūra paripphuṭā, tesan tam yeva tusitāsukham paṭisamvedenti, seyyathā pi devā subhakinnā (v. l. °kinha). ayam 'tatiyā sukh' upapatti.

२९ ख, Tib. 54b. 1

[ तिस्र एषणाः ]

आह। तिस्र इमा एषणाः [7] कामैषणा भवैषणा ब्रह्मचर्यैषणा च।[1] तत्र ये केचिच्छ्रमणा वा ब्राह्मणा वा कामैषणामापद्यन्ते सर्वे ते तिसृणां कामोपपत्तीनामर्थे। नात उत्तरा नाम भूयः। तत्र ये केचिच्छ्रमणा [Tib. 55a. 1] वा ब्राह्मणा वा [2]भवैषणामापद्यन्ते सुखनिमित्तं सर्वे ते यद्भूयसा सुखकामतया तिसृणां सुखोपपत्तीनामर्थे।[2] ननुभ्यस्तनुतरकास्ते येऽदुःखासुखायाः शान्ताया उपपत्तेरर्थे[3] एषणामापद्यन्ते। तस्मात्तत ऊर्ध्वमुपपत्तिर्न व्यवस्थाप्यते॥ ये केचिच्छ्रमणा वा ब्राह्मणा वा ब्रह्मचर्यैषणामापद्यन्ते सर्वे तेऽनास्रवस्य धातोरर्थे। अप्येके मिथ्याब्रह्मचर्यैषणामापद्यन्त आनिञ्ज्यस्यार्थे आकाशानन्त्यायतनस्य विज्ञानानन्त्यायतनस्याकिञ्चन्यायतनस्य [३० क] नैवसंज्ञानासंज्ञायतनस्यार्थे मिथ्या-[वि][4] [3] मोक्षतः परिकल्पितस्य। सा च सोत्तरा[5] ब्रह्मचर्यैषणा वेदितव्या। [4] निरुत्तरा[6] पुनरनास्रवस्य धातोरर्थे॥

[ आत्मभावव्यवस्थापनं ]

तत्रात्मभावव्यवस्थापनं। तद्यथा। चत्वारः[7] सत्त्वानामात्मभावप्रतिलम्भास्त्रैधातुके प्रज्ञायन्ते। [8]अस्त्यात्मभावप्रतिलम्भो यत्रात्मसञ्चेतना सङ्क्रामति न [5] परसञ्चेतना। तद्यथा। सन्ति कामधातौ क्रीडाप्रमोषका[9] नाम देवाः। तेऽस्मिन्समये[10]ऽत्यर्थं क्रीडारतिमण्डनस्थानमनुयुक्ता विहरन्ति। तेषां तथा विहरतां स्मृतिः प्रमुष्यते [6] स्मृतिप्रमोषात्तेषां सत्त्वानां तस्मात्स्थानाच्च्युतिर्भवति। तथा सन्ति मनःप्रदूषिका[11] नाम देवा ये तस्मिन्समये[12]ऽन्योन्यं चक्षुषा

1 Dīgha, iii. 16
2 Tib srid, MS bhayai°.
3 Here *upapatti* is in the sense of *utpatti* (Tib skye. ba).
4 Tib rnam. par thar. pa, MS °[dhi] moksatah
5 Tib bla. na. yod, MS *sāntarā*. Evidently wrong Tib. bla. na. med pa. meaning *anuttara* or *niruttara*.
6 Tib. bla na med pa
7 Tib *caturvidhāh* (rnam pa bźi) See note 4 on p. 104.
8 Tib yod
9 Cf *krīdāpradūsika*, Pali *khiddāpadosika*, v. 1 °*padūsika* Ak, ii 164, iii 219, Dīgha., i. 19
10 Tib *yasmin* (gan gi tshe).
11 Ak. ii 219. Pali manopadosika. Dīgha., i. 20
12 Tib. *te yasmin samaye* (de dag. gi. tshe.)

२९ ख, Tib. 54b. 1

चक्षुरुपनिध्या[य][1]. प्रेक्षन्ते। तेषां तथा प्रेक्षमाणानामन्योन्यं मनांसि[7] प्रदुष्यन्ति मनःप्रदोषात्तेषां सत्त्वानां तस्मात्स्थानाच्च्युतिर्भवति ॥

अस्त्यात्मभावप्रतिलम्भो यत्र परसञ्चेतना क्रामति नात्मसञ्चेतना। तद्यथा कललगतेषु घनगतेषु[ Tib. 55b. 1 ]पेशीगतेष्वर्बुदगतेषु मातुः कुक्षिगतेषु सत्त्वेषु ॥

अस्त्यात्मभावप्रतिलम्भो यत्रात्मसञ्चेतना क्रामति परसञ्चेतना च।[2] तद्यथा तेष्वेव जातेषु परिपूर्णेन्द्रियेषु परिपक्वेन्द्रियेषु ॥

अस्त्यात्मभावप्रतिलम्भो यत्र नैवात्मसञ्चेतना क्रामति न परसञ्चेतना। तद्यथा[3]रूप्यारूप्याव[3]चरेषु देवेषु नारकेषु नरकोपमेषु प्रेतेषु तथागतदूते[1] चरमभविके मैत्री[4]समापन्ने निरोधसमापन्नेऽन्तराभविके चेत्येवंभागीयेषु सत्त्वेषु ॥[5]

---

1 Tib *pradhisya* (tshugs. su)? But see Dīgha i 20 aññamaññam upanijjhāyantā° padūsenti

2 Tib. gzugs dan. gzugs med. pa. na MS *rūpyāvarūpyā*°.

3 So in Tib . de. bźin gśegs. pahi. pho ña. dan It is the same as *Jinadūta*, for example, one Suka was sent by Bhagavat to Āmrapālī. A messenger of the Buddha cannot be killed before he discharges his mission. See Ak, ii 220.

4 See here Dīgha , iii 231, Anguttara Nikāya ii.159 · Cattāro 'me bhikkhave attabhāvapatilābhā. Katame cattaro ? Atthi bhikkhave attabhāvapaṭilābho yasmim attabhāvapatilābhe attasamcetanā kamati no parasamcetanā. Atthi bhikkhave attabhāvapatilābho yasmim attabhāvapatilābhe parasamcetanā kamati no attasamcetanā. Atthi bhikkhave attabhāvapatilābho yasmim attabhāvapaṭilābhe attasamcetanā ca kamati parasamcetanā ca. Atthi bhikkave attabhāvapatilābho yasmim attabhāvapatilābhe n'ev'attasamcetanā kamati no parasamcetanā. See also Ak. ii 219, foot note AKV ( Ed. U. Wogihara, p. 170) : ātmasamcetanā atmanā māranam, parasamcetanā parena māranam. See also, *Ibid.* kim ātma saṃcetanaiva kiamate *śvayam mrtyutvāt* anupakramanadharmāno hi buddhā bhagavanta āyurutsarga-vaśitvalābhinaś ca

The word *ātmabhāva*, Pali *attabhāva* means (i) 'body'. Tib. lus ; (ii) 'life' 'rebirth' and sometimes (iii) character, quality of heart (atta) as in Suttanipāta, 388 (See Pali- Eng. Dic. of PTS) *Ātmabhāva.pratilambha* or *pratilābha* is explained by some as assumption of an existence'.

३० क, Tib. 54b. 6

[ हेतुफलव्यवस्थानं ]

तत्र हेतुफलव्यवस्थानं चतुर्भिराकारैर्वेदितव्यं। [5] लक्षणतोऽधिष्ठानतः प्रभेदतो व्यवस्थानतश्च। तत्र हेतुलक्षणं[1] कतमत्। यत्पूर्वं यच्च प्रतिष्ठाय[2] यच्च सङ्गम्य यस्य धर्मस्य प्राप्तिर्वा सिद्धिर्वा निष्पत्तिर्वा [6] क्रिया वा स तस्य हेतुरित्युच्यते।

किंपूर्वा कि प्रतिष्ठाय किं सङ्गम्य कस्य धर्मस्योत्पत्तिर्भवति। स्वबीजपूर्वा बीजाश्रयं स्थापयित्वा तदन्यमाश्रयं प्रतिरूपिण[7]मरूपिणं वा कर्म च प्रतिष्ठाय सहायमालम्बनं च सङ्गम्य कामप्रतिसंयुक्तानां रूपप्रतिसंयुक्तानामारूप्यप्रतिसंयुक्तानामप्रतिसंयुक्तानामुत्पादिता भवति। तच्च [Tib. 56a 1] यथायोगं॥

किंपूर्वा किं प्रतिष्ठाय किं सङ्गम्य कस्य धर्मस्य प्राप्तिर्भवति। श्रावकप्रत्येकबुद्धतथागतगोत्रपूर्वाध्यात्माङ्गबलं प्रतिष्ठाय बाह्याङ्ग[2]बलं सङ्गम्य क्लेशविसंयोगस्य निर्वाणस्य प्राप्तिर्भवति॥

तत्रेदमध्यात्माङ्गबलं। तद्यथा योनिशो मनसिकारोऽल्पेच्छतादयश्च। अध्यात्मं कुशला धर्मास्तद्यथा मनुष्यत्वं। [3]आर्यायतने प्रत्याजातिः। इन्द्रियैरविकलता। अपरिवृत्तकर्मान्तता[3]। आयतन[३०ख]गतः प्रसादः। इत्येवंभागीया धर्मा अध्यात्माङ्गबलमित्युच्यते॥

तत्रेदं बाह्याङ्गबलं [4] तद्यथा बुद्धानामुत्पादः। सद्धर्मस्य देशना। देशितानां धर्माणामवस्थानं। अवस्थितानां चानुप्रवर्तनं। परतश्च प्रत्यनुकम्पा। इत्येवंभागीया धर्मा बाह्याङ्ग[5]बलमित्युच्यते॥

तत्र किंपूर्वा किं प्रतिष्ठाय किं सङ्गम्य कस्य धर्मस्य सिद्धिर्भवति। ज्ञेयाधिमुक्तिरुचिपूर्वा प्रतिज्ञाहेतूदाहरणं प्रतिष्ठाय प्रतिवादिन[6]मविलोमां च परिषदं सङ्गम्य साध्यस्यार्थस्य सिद्धिर्भवति॥

किंपूर्वा किं प्रतिष्ठाय किं सङ्गम्य कस्य धर्मस्य निष्पत्तिर्भवति। शिल्पज्ञानपूर्वा तदनुगं व्यवसायं प्रतिष्ठाय शिल्पकर्मस्थानीयं भाण्डोपस्करं [7] तस्य तस्य शिल्पकर्मस्थानस्य सिद्धिर्भवति॥

---

1 Tib. rgyuhi. mtshan ñid, MS *hetuphala°*.
2 Tib. gan la [b]rten nas, MS *pratisthā*.
3 MS adds *sa*, not supported by Tib.

३० क, Tib. 55b. 4

[किंपूर्वा किं प्रतिष्ठाय किं सङ्गम्य कस्य धर्मस्य स्थितिर्भवति ][1] तृष्णापूर्वा पुनराहारस्थितिकर्माश्रयं प्रतिष्ठाय चतुर[2] आहारान्सङ्गम्य भूतानां सत्त्वानां [Tib. 56b. 1] स्थितिर्भवति । यापन[3] पुष्टिश्च ।

किंपूर्वा किं प्रतिष्ठाय किं सङ्गम्य कस्य धर्मस्य क्रिया भवति । स्वबीजपूर्वोत्पत्तिं प्रतिष्ठायोत्पत्तिप्रत्ययं सङ्गम्य सकर्मकस्य[4] धर्मस्य स्वक्रिया प्रज्ञायते [5]स्वकर्मकरणं [2] तद्यथा चक्षुषो दर्शनं । [6]एवमवशिष्टानामिन्द्रियाणां स्वकं[7]-स्वकं कर्म वेदितव्यं । तथा पृथिवी धारयति । आपः क्लेदयन्ति । अग्निर्दहति । वायुः शोषयतीत्येवंभागीयं बाह्यानामपि भावानां स्वकस्वकं [3] कर्म वेदितव्यं ॥

[हेतुप्रत्ययफलाधिष्ठानं]

हेतुप्रत्ययफलाधिष्ठानं कतमत् । पञ्चदशेमानि हेतोरधिष्ठानानि । तद्यथा । वाक् । अनुभवः । वासना । साभिनिष्यन्दं बीजं । श्लिष्टनिरोधः । विषयः । इन्द्रियं । क्रिया । [4] पुरुषकारः । तत्त्वदर्शनं । आनुकूल्यं । शक्तिवैचित्र्यं । सामग्री । अन्तरायः । अनन्तरायश्च ॥

हेतुप्रत्ययफलप्रभेदः कतमः । दश हेतवः । चत्वारः प्रत्ययाः । पञ्च फलानि ॥

दश हेतवः [5] कतमे । अनुव्यवहारहेतुः । अपेक्षाहेतुः । आक्षेपहेतुः ।[8] अभिनिर्वृत्तिहेतुः ।[9] परिग्रहहेतुः आवाहकहेतुः ।[10] प्रतिनियमहेतुः । सहकारिहेतुः । विरोधहेतुः । अविरोध [6] हेतुश्च ॥

---

1 Tib, sna. na. yod. pa. ci. źig ci la. brten nas. । ci. dan. phrad. na. chos. ci źig gnas par hgyur. że na.

2 Tib. lit. *caturvidhān* (zas rnam. pa. bźi.)

3 This and the following words are not ascertained in Tib. as it is indistinct here.

4 Tib. adds *svasva* (ran. ran. gi ) 5 Not in Tib.

6 Omitted in Tib.

7 Tib. ran. ran. gi, see below MS *svakaṃ svakaṃ*.

8 Tib. ḥphon. pa (?)

9 Tib. mnon. par hgrub. pahi MS *anirvṛtti*-

10 Tib. ḥdren. pahi. MS *avāhaka*.

३० ख, Tib. 56a. 6

चत्वारः प्रत्ययाः कतमे। हेतुप्रत्ययः। समनन्तरप्रत्ययः। [1]आलम्बनप्रत्ययः। अधिपतिप्रत्ययश्च ॥[2]

पञ्च फलानि कतमानि। विपाकफलं। निष्यन्दफलं। विसंयोगफलं[7] पुरुषकारफलं। अधिपतिफलं च॥

[ हेतुप्रत्ययव्यवस्थानं ]

हेतुप्रत्ययव्यवस्थानं कतमत्। तत्र वाचं हेत्वधिष्ठानमधिष्ठायानुव्यवहारहेतुः प्रज्ञायते। [3]तत्कस्य हेतोः। तथाहि। [4]कामप्रति[ ३१क ]संयुक्तेषु धर्मेषु [Tib. 57a. 1] रूपप्रतिसंयुक्तेष्वारूप्यप्रतिसंयुक्तेषु अप्रतिसंयुक्तेषु[5] नामव्यवस्थानपूर्वा संज्ञा प्रवर्तते। संज्ञापूर्वा वाक्प्रवर्तते। वाचा यथादृष्टं[2] यथाश्रुतं यथामतं[6] यथाविज्ञानमनुव्यवह्रियते। तस्माद्वाचमधिष्ठायानुव्यवमहारहेतुः प्रज्ञाप्यते॥

तत्रानुभवहेत्वधिष्ठानमधिष्ठायापेक्षाहेतुः प्रज्ञाप्यते। [3] तत्कस्य हेतोः। तथा हि। यः कामप्रतिसंयुक्तेन सुखेनार्थी भवति स तदपेक्ष्य कामानां लाभं पर्येषते संनिचयं वा प्रतिनिषेवणं वा पर्येषते॥ यो रूपारूप्यप्रतिसंयुक्तेन सुखेनार्थी [7]भवति[4]स तदपेक्ष्य तत्प्रत्ययानां लाभं वा प्रतिनिषेवणं वा पर्येषते। यो वा प्रतिसंयुक्तेन सुखेनार्थी भवति स तदपेक्ष्य तत्प्रत्ययानां लाभं वा प्रतिषेवणं वा पर्येषते। यो वा पुनर्दुःखेनानर्थी[8] स [5]तदपेक्ष्य तत्प्रत्ययानां परिहारं तत्प्रहाणप्रत्ययानां लाभं वा प्रतिनिषेवणं वा पर्येषते। तस्मादनुभवमधिष्ठायाक्षेपहेतुः[9] प्रज्ञाप्यते॥

तत्र वासनाहेत्वधिष्ठानमधिष्ठायाक्षेपहेतुः प्रज्ञाप्यते। [6] तत्कस्य

---

1 Tib, de. ma. thag, pahi. rkyen

2 See Mahāvyutpatti, (Sakaki), CXV.

3 Tib. hdogs so which is generally used for *prajñāpyate*

4 MS adds here *yaḥ* not in Tib.

5 Tib. gzugs, med pa, dan ldan, pa. rnams dan. ldan, pa. ma yin. pahi. chos rnams. la MS *pratisaṃyuktesu*(?)

6 Tib. ji. ltar bye brag phyed. pa Its meaning is not clear. But see the Tib Text 35b. 4 where in the sense of *amata* we have bye. brag. ma. phyed. But how is it so?

7 MS *vāg*. See Mahāvyutpatti, 2882

8 Tib. *duhkhenārthī* (sdug. bsnal. gyi. hdod pa. gan. yin. pa.)

9 Tib. hphen. pahi. rgyu. MS omits *ākṣepa*

३० ख, Tib. 56b. 6

हेतोः। तथा हि। शुभाशुभकर्मपरिभाविताः संस्कारास्त्रैधातुके[ष्टानिष्ट-गतिष्व् ][1]इष्टानिष्टात्मभावानाक्षिपन्ति। वाह्यानां च भावानां तेनैवाधिपत्येन सम्पन्नविपन्नता[2]। तस्मात्संस्काराणां शुभाशुभकर्मवासनामधिष्ठायापेक्षाहेतुः प्रज्ञाप्यते॥

तत्र साभिष्यन्दं बीजं हेत्वधिष्ठानमधिष्ठायाभि[Tib. 57b 1]निर्वृत्तिहेतुः प्रज्ञाप्यते। तत्कस्य हेतोः। तथा हि। कामप्रतिसंयुक्तानां धर्माणां रूपारूप्यप्रतिसंयुक्तानां स्वकस्वकाद्बीजात्प्रादुर्भावो भवति। तृष्णा पुनर्बीजाभिनिष्यन्द इत्युच्यते। ततस्तया[2]भिष्यन्दितं बीजमाक्षिप्तानामात्म[3]भावानामभिनिर्वृत्तये भवति। यथोक्तं[4]।

कर्महेतुरुपपत्तये। तृष्णाहेतुरभिनिर्वृत्तय इति।

तस्मात्साभिष्यन्दं बीजमधिष्ठायाभि[3]निर्वृत्तिहेतुः प्रज्ञाप्यते॥

तत्र क्लिष्टनिरोधं हेत्वधिष्ठानमधिष्ठाय तथा विषयमिन्द्रियं क्रियां पुरुषकारं तत्त्वदर्शनं च हेत्वधिष्ठा[5]नमधिष्ठाय परिग्रहहेतुः प्रज्ञाप्यते। [4] तत्कस्य हेतोः। तथा हि। कामप्रतिसंयुक्तेषु धर्मेषु [6]समनन्तर-[7]निरोधपरिगृहीता संस्काराणां प्रवृत्तिर्भवति। विषयपरिगृहीतेन्द्रियपरिगृहीता क्रियापरिगृहीता पुरुषकार[8]परिगृहीता च। यथा कामप्रतिसंयुक्तानामेवं रूपप्रतिसंयुक्तानामारूप्य[5]प्रतिसंयुक्तानां तत्त्वदर्श[न][9]-परिगृहीता वा पुन-[३१ख]स्तदन्येषामप्रतिसंयुक्तानां धर्माणां प्रवृत्तिर्भवति। [6] तस्माच्छिष्टनिरोधं विषयमिन्द्रियं क्रियां पुरुषकारं तत्त्वदर्शनं चाधिष्ठाय परिग्रहहेतुः प्रज्ञाप्यते॥

---

1 Tib. sdug. pa dan mi. sdug pahi hgro ba. rnams su.

2 Tib. phun su mchogs. pa. dan. rgyud. pa. hgyur bahi. phyir. te Hereby the Tib text at the end shows *hetu* which may be expressed by *iti*.

3 In X read hphans.

4 Not traced.

5 Omitted in Tib.

6 Tib °samyuktānām dharmāṇām (ldan. pahi. chos rnams kyi).

7 Tib. de. ma thag tu., MS *anarantara*

8 Tib. skes. buhi byed pas , MS *puruṣaparigṛhītā*

9 Tib. de. kho. na. la. blta. bas

 

तत्रानुकूल्यहेत्वधिष्ठानमधिष्ठायावहकहेतुः प्रज्ञाप्यते। तत्कस्य हेतोः। [7] तथा हि। कामप्रतिसंयुक्ताः कुशला धर्माः काम[1]प्रतिसंयुक्तान्कुशलान्[2] वैशेषिकान्धर्माना[3]वहन्ति। एवं कामप्रतिसंयुक्ता कुशला धर्मा रूपप्रतिसंयुक्तानारूप्यप्रतिसंयुक्तानप्रतिसंयुक्तान्कुशलान्धर्मानावहन्ति। [Tib. 58a 1] तदनुकूलतया यथा कामप्रतिसंयुक्ता एवं रूपप्रतिसंयुक्ता रूपप्रतिसंयुक्तान्कुशलान्धर्मान् वैशेषिकानारूप्यप्रतिसंयुक्तानप्रतिसंयुक्तान्[4]। [2] यथारूपप्रतिसंयुक्ता एवमारूप्यप्रतिसंयुक्ता आरूप्यप्रतिसंयुक्तान्कुशलान्धर्मान्वैशेषिकान्प्रतिसंयुक्तानप्रतिसंयुक्तांश्च कुशलान्धर्मान् आवहन्ति। यथारूप्यप्रतिसंयुक्ता एव[3]मप्रतिसंयुक्ता[5] अप्रतिसंयुक्तान्कुशलान्धर्माना[6]वहन्ति। अप्यसंस्कृतं साक्षाद्रूपमावहन्ति[7]। तथा कुशलधर्मा[8] अकुशलान्वैशेषिकान्धर्मानावहन्ति। तद्यथा कामरागो [4] द्वेषं मोहं मानं दृष्टिं विचिकित्सां कायदुश्चरितं वाग्दुश्चरितं मनोदुश्चरितं। यथा कामरागो एवं [5] द्वेषो मोहो मानो दृष्टिर्विचिकित्सा यथायोगं वेदितव्याः। एवमव्याकृता धर्मा कुशलाकुशलाव्याकृतान्धर्मानावहन्ति। तद्यथा कुशलाकुशलाव्याकृतबीजकमा[6]लयविज्ञान[मावहन्ति][9]। तथा व्याकृता धर्मा अव्याकृतान्वैशेषिकान्धर्मानावहन्ति। तद्यथा कवडीकार आहारो भूतानां सत्त्वानां स्थितये यापनाया ओजसो वलस्य पुष्टेश्चावाहकस्तदनुकूलतया। [7] तस्मादानुकूल्यहेतुमधिष्ठायावाहकहेतुः प्रज्ञाप्यते॥

तत्र शक्तिवैचित्र्यं हेत्वधिष्ठानमधिष्ठाय प्रतिनियमहेतुः प्रज्ञाप्यते। तत् कस्य हेतोः। तथा हि। कामप्रतिसंयुक्ता धर्मा विचित्रस्वभावा [Tib. 58b 1] विचित्रात्स्वभावविशेषाच्छक्तिवैचित्र्यादुत्पद्यन्ते। यथा कामप्रतिसंयुक्ता एवं

1-2 Omitted in Tib.
3 Tib. adds hdren. te. So also below.
4 Omitted in Tib
5 As Tib. reads *aprati°* (ldan. pa. ma yin pa rnams)
6 Tib. adds *vaiśeṣikān* (khyad. par can inams)
7 Tib simply *sākṣāt* omitting *rūpaṃ* (mnon. sum. du)
8 Tib. adds *api*(kyan)
9 Tib. hdren. to.

३१ख, Tib. 57b. 6

रूपप्रतिसंयुक्ता आरूप्यप्रतिसंयुक्ता अप्रतिसंयुक्ताः। [2] तस्माच्छक्तिवैचित्र्यमधिष्ठाय प्रतिनियमहेतुः प्रज्ञाप्यते।

तत्र सामग्रीहेत्वधिष्ठानमधिष्ठाय सहकारिहेतुः प्रज्ञाप्यते। तत्कस्य हेतोः। तथा हि। स्वामुत्पत्तिसामग्रीमागम्य कामप्रतिसंयुक्तानां धर्माणामुत्पादो भवति। [3] यथा कामप्रतिसंयुक्तानामेवं रूपप्रतिसंयुक्तानामारूप्यप्रतिसंयुक्तानामप्रतिसंयुक्तानां। यथोत्पत्तिसामग्र्येवं प्राप्तिसामग्री सिद्धिसामग्री [3] निष्पत्तिसामग्री[1] क्रियासामग्री। तस्मात्सामग्रीमधिष्ठाय सहकारिहेतुः प्रज्ञाप्यते॥

तत्रान्तराय[2]हेत्वधिष्ठानमधिष्ठाय विरोधहेतुः प्रज्ञाप्यते। [4] तत्कस्य हेतोः। तथा हि। कामप्रतिसंयुक्तानां धर्माणा[3]मुत्पत्तये स चेदन्तरायः प्रत्युपस्थितो भवति [३२क] नोत्पद्यन्ते। यथाकामप्रतिसंयुक्तानामेवं रूपप्रतिसंयुक्तानामारूप्यप्रतिसंयुक्तानामप्रति[6]संयुक्तानां। यथोत्पत्तय एवं प्राप्तये सिद्धये निष्पत्तये क्रियायै। तस्मादन्तरायमधिष्ठाय विरोधहेतुः प्रज्ञाप्यते॥

तत्रानन्तरायं हेत्वधिष्ठानमधिष्ठायाविरोधहेतुः प्रज्ञाप्यते। तत्कस्य हेतोः। तथा हि[4]। कामप्रतिसंयुक्तानां धर्माणा[5][मुत्पत्तये][6]। स चेदनन्तरायः प्रत्युपस्थितो भवति भवत्येषामुत्पादः। [Tib. 59a. 1] कामप्रतिसंयुक्तानामेवं रूपप्रतिसंयुक्तानामारूप्यप्रतिसंयुक्तानां यथोत्पत्तिरेवं प्राप्तिः सिद्धि[२]र्निष्पत्तिः। क्रिया। तस्मादनन्तरायमधिष्ठायाविरोधहेतुः प्रज्ञाप्यते॥

तत्र बीजं प्रत्ययाधिष्ठानमधिष्ठाय हेतुप्रत्ययः प्रज्ञाप्यते॥ क्लिष्टनिरोधं प्रत्ययाधिष्ठानमधिष्ठाय समनन्तरप्रत्ययः [3] प्रज्ञाप्यते॥ [7]विषयं [8]प्रत्ययाधिष्ठानमधिष्ठायालम्बनप्रत्ययः प्रज्ञाप्यते॥ तदन्यानि प्रत्ययाधिष्ठानान्यधिष्ठायाधिपतिप्रत्ययः प्रज्ञाप्यते॥

---

1 Tib. adds *sthitisāmagrī* (gnas. pahi tshogs. pa. dan).
2 Tib bar. du gcod pa. la., MS *anantarāyam*.
3 Tib. chos. rnams, MS *karmāṇām*.
4 Tib lit. *evam* (hdi. ltar.)
5 Tib. chos. rnams ; MS *karmāṇām*.
6 Tib skye. ba la.
7 Tib adds here *tatra* (de. la )
8 MS *pratyādhi-*

३१ ख, Tib. 58b. 1

तत्र वासनामानुकूल्यं च हेत्वधिष्ठानं प्रत्ययाधिष्ठानं चाधिष्ठाय वि[4]-पाकफलं निष्यन्दफलं च प्रज्ञाप्यते। तत्त्वदर्शनं हेत्वधिष्ठानं प्रत्ययाधिष्ठानं चाधिष्ठाय विसंयोगफलं प्रज्ञाप्यते। पुरुषकारं हेत्वधिष्ठानं प्रत्ययाधिष्ठानं चाधिष्ठाय पुरुषकारफलं प्रज्ञाप्यते। [5] अवशिष्टानि हेत्वधिष्ठानानि प्रत्यया-धिष्ठानानि चाधिष्ठायाधिपतिफलं प्रज्ञाप्यते ॥

तत्र हितार्थो हेतुः। प्रतिष्ठार्थः प्रत्ययः। निष्पत्त्यर्थः फलार्थः[1]। अपि खलु पञ्चभिराकारैर्हेतुव्यवस्थानं भवति। तद्यथा जनको हेतुः। उपायहेतुः। सहभूतो [ हेतुः ]। [2]अनन्तरनिरुद्धः। [6] चिरनिरुद्धश्च ॥

तत्र जनकोऽभिनिर्वृत्तिहेतुः। अवशिष्टा उपाय[3]हेतवः सहभूताः[4]। तद्यथा। [5]एकत्यः परिग्रहहेतुः। तद्यथा चक्षुश्चक्षुर्विज्ञानस्य। एवं श्रोत्रा[7]द्य-स्तदन्येषां विज्ञानानामनन्तरनिरुद्धः। तद्यथा। अभिनिर्वृत्तिहेतुः। [चिर-निरुद्धः। तद्यथा। आक्षिप्तो हेतुः ॥][6]

पुनरपरैः पञ्चभिराकारैर्हेतुव्यवस्थानं भवति। तद्यथा। [Tib 59b.1] इष्टो हेतुः। अनिष्टो हेतुः। दृष्टि[7]हेतुः। प्रवृत्तिहेतुः। निवृत्तिहेतुश्च ॥

पुनरपरैः सप्तभिराकारैर्हेतुव्यवस्थानं भवति। तद्यथा अनित्यो हेतुः। न नित्यो धर्मः कस्यचिद्धेतुर्भवति। उत्पत्तिहेतुर्वा प्राप्तिहेतुर्वा। सिद्धिहेतुर्वा। [2] निष्पत्तिहेतुर्वा। [ स्थितिहेतुर्वा ][8]। क्रियाहेतुर्वा[9]। अनित्योऽपि च धर्मो-ऽनित्यस्य हेतुर्भवन्परभावस्य हेतुर्भवति उत्तरस्य च स्वभावस्य। नो तु

---

1 Omitted in Tib

2 Tib, rgyu. So in the following two terms

3 Tib. thabs. kyi rgyu na MS *upādāya*-

4 Tib. thabs kyi. rgyu. ni lhag. ma rnams ‖ lhan. cig. hbyun. bahi. rgyu. ni. hdi. lta, ste. ǀ

5 MS adds *tad*- not supported by Tib

6 Tib. hgags. nas. rin. du. lon. pa. hdi. lta ste. hphan pahi. rgyu. ho. ‖

7 Tib lta. bahi., MS *pusti*°.

8 Tib. gnas. pahi. rgu. ham.

9 Tib. adds here *yasya hetur api na bhavati* (gan. gi. rgyur. yan. mi hgyur. ro,) (?)

३२ क, Tib. 59a. 3

तत्क्षणिकस्य[1] परस्योत्तरस्य [3] च स्वभावस्य हेतुर्भवति। उत्पन्नानिरुद्धो[2] भवति नानुत्पन्ननिरुद्धः। उत्पन्ननिरुद्धोऽपि[3]। भवत्प्रत्ययान्तरं लभमानो भवति नालभमानः। प्रत्ययान्तरमपि [ ३२ख ] लब्ध्वा भवन् विकारमापद्यमानो भवति न विकारमनापन्नः। [4] विकारमापद्यमानोऽपि भवञ्छक्तियुक्ताद्भवति न शक्तिहीनात्। शक्तियुक्तादपि भवन्ननुरूपानुकूलाद्भवति नाननुरूपाननुकूलादित्येभिः सप्तभिराकारैर्हेतुना यथायोगं [5] व्यवस्थानं वेदितव्यं ॥

तत्र लक्षणप्रज्ञप्तिव्यवस्थानं कतमत्। तत्सप्ताकारं वेदितव्यं। शरीरतोऽपि। आलम्बनतोऽपि। आकारतोऽपि समुत्थानतोऽपि। प्रभेदतोऽपि। विनिश्चयतोऽपि। प्रवृत्तितोऽपि ॥ [6] तत्रोद्दानं।

शरीरमालम्बनमाकारः समुत्थानं प्रभेदनं।
विनिश्चयः प्रवृत्तिश्च लक्षणस्य समासतः ॥

वितर्कविचाराणां शरीरं कतमत्। आलम्बने[4]ऽनभ्यूहत[7]श्चेतनशरीरा वितर्कविचाराः। आलम्बने पुनरभ्यूहतो ज्ञानशरीरा वितर्कविचारा वेदितव्याः ॥

तत्र वितर्कविचाराणामालम्बनं कतमत्। नामकायपदकायव्यञ्जनकायाश्रितो[Tib. 60a, 1]ऽर्थ आलम्बनं ॥

वितर्कविचाराणामाकारः कतमः। तस्मिन्नेवालम्बनेऽर्पणानर्पणाकारो वितर्कः ॥ तत्रैव पुनः प्रत्यवेक्षणाकारो विचारः ॥

वितर्कविचाराः किं[2]समुत्थानाः। वाक्समुत्थानाः ॥

वितर्कविचाराणां[5] प्रभेदः कतमः। सप्तविधः प्रभेदः। नैमित्तिकः[6] [7]पूर्ववद्यावदक्लिष्टश्च ॥

---

1 According to Tib it means *tasya kṣaṇikasya* (skad cig de. ñid. kyi.)

2 So Tib. *utpannaniruddho* reading skyes la hgags , MS *utpannāni*

3 See note 2 above.

4 As in Tib reading dmigs. pa la. MS *ālambanam abhy°*. So in the following sentence

5 In Xylograph read kyi for kyis.

6 Tib lit. *vitarko vicāraś ca* (rtog. pa. dan. dpyod pa gan. yin. pa)

7 Tib. adds *anaimittikaḥ* (mtshan. ma. can. ma. yin. pa.)

३२क, Tib. 59b. 2

वितर्कविचाराणां वि[3]निश्चयः कतमः[1]। यो वितर्कविचारः विकल्पोऽपि सः। यो विकल्पो वितर्कविचारोऽपि[2] सः[3]। [4] यस्तावद्वितर्कविचारो विकल्पोऽपि सः। स्यात्तु[4] विकल्पो न वितर्कविचारः। लोकोत्तरज्ञानमपेक्ष्य तदन्ये सर्वे त्रैधातुकावचराश्चित्तचैतसिका धर्मा विकल्पेन[5] [5] न वितर्कविचारः ॥

वितर्कविचाराणां प्रवृत्तिः कतमा। नारकाणां वितर्कविचाराः किमाकाराः प्रवर्तन्ते किस्पर्शा किसमुदीरिताः किंसम्प्रयुक्ताः किंप्रार्थनाः किंकर्मकाः। [6] यथा नारकाणा[6]मेवं तिरश्चां प्रेतानां मनुष्याणां कामावचराणां देवानां प्रथमध्यानभूमिकानां देवानां वितर्कविचाराः किमाकाराः किंस्पर्शाः [7] किंसमुदीरिताः किंसम्प्रयुक्ताः किंप्रार्थनाः किंकर्मकाश्च प्रवर्तन्ते।

तत्र नारकाणां वितर्कविचारा एकान्तेन दैन्याकारा अनिष्टविषयसंस्पर्शा दुःखसमुदीरिता [Tib 60 b 1] दौर्मनस्यसम्प्रयुक्ता दुःखविमोक्षप्रार्थनाश्चित्तसंक्षोभकर्मकाश्च प्रवर्तन्ते ॥

यथा नारकाणामेवं दुःखितानां प्रेतानां तिरश्चां [2] मनुष्याणां प्रेतसहगतिकानां (?)[7] वितर्कविचारा बाहुल्येन दैन्याकारा अल्पमोदाकाराः। बाहुल्येनानिष्टविषयसंस्पर्शा अल्पेष्टविषयसंस्पर्शाः। बाहुल्येन [3] दुःखसमुदीरिता अल्पसुखसमुदीरिताः। बाहुल्येन दौर्मनस्याल्पसौमनस्यसंप्रयुक्ताः। बाहुल्येन दुःखविमोक्षप्रार्थना [8]अल्प[4]सुखसमवधानप्रार्थनाश्चित्तसंक्षोभकर्मकाश्च प्रवर्तन्ते ॥

---

1 In the Xylograph read *kyi* for *kyis*
2 In the Xylograph the reading is yan for gan
3 In Tib. this sentence is repeated once more omitting gan wrongly for yan See note 2
4 Tib. has here *yadi* or *yadyapi* (mod kyi )
5 MS *vikalpena,* Tib rnam par rtog pa yin la / rtog pa dan dpyod pa ma yin no //
6 Tib adds *sattvānām* (sems can ), so below not
7 MS indistinct Tib does not help reading rdzu hphrul che ba rnam kyi which means *maharddhikānām*
8 MS has here *alpa,* but below it reads sometimes as *alpam* Literally Tib supports the former, but as in the case of *bāhulyena* it may also suggest the latter In the MS before *-modā°* two letters are not clear , Tib may suggest *sam* (kun. tu dgah ba )

देवानां कामावचराणां [ ३२ क ] वितर्कविचारा बाहुल्येनामोदाकारा अल्पं दैन्याकाराः। बाहुल्येनेष्टविषयसंस्पर्शा [5] अल्पमनिष्टविषयसंस्पर्शाः। बाहुल्येन सुखसमुदीरिता अल्पं दुःखसमुदीरिताः। बाहुल्येन सौमनस्य-संप्रयुक्ता अल्पं दौर्मनस्यसंप्रयुक्ता। बाहुल्येन सुखसमवधानप्रार्थना [6] अल्पं दुःखविमोक्षप्रार्थनाश्चित्तसंक्षोभकर्मकाश्च प्रवर्तन्ते ॥

प्रथमध्यानभूमिकानां देवानां वितर्कविचारा एकान्तेनामोदाकाराः। [7] एकान्तेनाध्यात्ममिष्टविषयसंस्पर्शाः। एकान्तेन सुखसमुदीरिताः। एकान्तेन सौमनस्यसंप्रयुक्ताः। एकान्तेन सुखावियोगप्रार्थनाश्चिन्तासंक्षोभकर्मकाश्च ॥

[ योनिशो मनस्कारप्रज्ञप्तिः ]

[Tib 61a. 1] तत्र योनिशो मनस्कारप्रज्ञप्तिव्यवस्थानं कतमत्। तदष्टा-कारं वेदितव्यम्। अधिष्ठानतोऽपि। वस्तुतोऽपि। पर्येषणतोऽपि। परिभोगतो-ऽपि। सम्यक्प्रतिपत्तितोऽपि। श्रावक[2]यानसंभार[1]प्रयोगतोऽपि। प्रत्येक-बुद्धयानसंभारप्रयोगतोऽपि। पारमितानिर्हारप्रयोगतोऽपि॥ तत्रोद्दानं।

अधिष्ठानं च वस्तु[2] च एषणा परिभोगता।
प्रतिपत्तिश्च बोधी द्वे[3] तथा पारमितेन (?) च ॥

[3] योनिशो मनस्कारप्रयुक्तानां वितर्कविचाराणामधिष्ठानं कतमत्। षडधिष्ठानानि। तद्यथा। निश्चयकालः। निवृत्तिकालः। कर्मकालः। लौकिक-वैराग्यकालः [4] लोकोत्तरवैराग्यकालः। सत्त्वानुग्रहकालश्च ॥

योनिशो मनस्कारसम्प्रयुक्तानां [वस्तु][4] कतमत्। अष्टौ वस्तूनि[5]। दान-मयं[6] पुण्य[5]क्रियावस्तु। शीलमयं। भावनामयं। श्रुतमयं। चिन्तामयं। तदन्यद्भावनामयं। प्रतिसंख्यानमयं। सत्त्वानुग्रह[6]मयं च ॥

---

1 Tib tshogs , MS *saṃhāra-*, so below

2 So the MS and Tib (dnos po )

3 Tib. byan. chub gñis , MS *dvedhā dhī*

4 Tib dnos po.

5 See Mahāvyutpatti, § XCIII vastu Tib dnos po without the plural sign

6 Tib. sbyin pa las byün bahi , MS *nidāna°*, see Mahāvyut-patti, § XCIII

३२ क, Tib. 60b. 4

योनिशो मनस्कारप्रयुक्तानां वितर्कविचाराणामेषणा कतमा। यथापीहैकत्यो धर्मेणासाहसेन[1] भोगान्पर्यैषते नाधर्मेण साहसेन॥

परिभोगः कतमः। [7] यथापि स एव तथा भोगान्पर्यैष्या[2]रक्तः परिभुङ्क्तेऽसक्तोऽगृद्धो[3]ऽग्रथितोऽमूर्च्छितोऽनध्यवसितोऽनध्यवसायमापन्न [Tib 61b, 1] आदीनवदर्शी निःसरणप्रज्ञ इव[4] भुङ्क्ते॥

सम्यक्प्रतिपत्तिः कतमा। यथापीहैकत्यो मातृज्ञः[5] पितृज्ञः श्रामण्यो ब्राह्मण्यः कुलज्येष्ठा[2]पचायकोऽर्थकरः कृत्यकर इहलोके परलोकेऽवद्यदर्शी दानानि ददाति। पुण्यानि करोति। उपवासमुपवसति। शीलं समा[3]-दाय वर्तते॥

श्रावकसंभार[6]प्रयोगं[7] श्रावकभूमौ विस्तरेण वक्ष्यामि। प्रत्येकबुद्धसंभार-प्रयोगं[8] प्रत्येकबुद्धभूमौ विस्तरेण वक्ष्यामि। पारमितानिर्हारप्रयोगं बोधिसत्त्वभूमौ [4] विस्तरेण वक्ष्यामि।

अपि खलु चत्वारि दानपतेर्लक्षणानि। इच्छा। अपक्षपातः। विघातापनयः। सम्यग्ज्ञानं च॥

चत्वारि शीलवल्लक्षणानि। इच्छा। [३३ ख] सेतुबन्धः (?)[9] [5] असमुदाचारः। सम्यग्ज्ञानं च॥

---

1 In the Xylograph the reading is bab tsol for bab tshol as below

2 According to Tib *paryeṣya* is to be taken with *tathā*

3 Tib chams pa med pa dan

4 Tib bžin. du , MS indistinct

5 Tib mar, hdzin pa , MS mātra° For this and the following four words cf amātṛjñatā apitṛjñatā aśrāmanyatā abrāhmanyatā kulena jyesthānupālakatvam in the *Sukasūtra*, Hoernle's Manuscript Remains, Vol I, p 49

6 Tib tshogs , MS *saṃhāra* So in the following sentence

7 MS °yogah So in the following sentence.

8 See notes 6 and 7

9 It is not clear at all. Tib also does not help, nor is it legible

३३ क, Tib 61a 6

चत्वारि भावक[1]लक्षणानि। आशयविशुद्धिः। उपसंहारविशुद्धिः अधिमुक्तिसमापत्तिविशुद्धिः। ज्ञानवि[6]शुद्धिश्च ॥

षड्विधं पैण्डिल्यं[2]। समादानपैण्डिल्यं। आजीविकपैण्डिल्यं। पतित[4]-पैण्डिल्यं। निसर्ग[5]पैण्डिल्यं। विषयवैकल्यस्थपैण्डिल्यं।[6] परिगर्ध-पैण्डिल्यं [7] च ॥

अष्टविध उपघातः। जिघत्सोपघातः। पिपासोपघातः। कदनोप-घातः। परिश्रमोपघातः। शीतोपघातः। उष्णोपघातः। अनावरणोपघातः। आवरणोप[Tib 62a. 1]घातश्च ॥

पुनः षड्विध उपघातः। सहजः। इच्छाविघातिकः। औपक्रमिकः। ऋतु-परिणामिकः। पारिस्रविकः। व्यवहारसमुच्छेदिक[2]श्च ॥

षड्विधोऽनुग्रहः। उपस्तम्भानुग्रहः। उपक्रमानुपघातानु[7]ग्रहः। गोपनानु-ग्रहः। गन्ध[माल्य][8]लेपनानुग्रहः संवासानुग्रहश्च[9] ॥

---

1 Tib. sgam pa pohi., MS *bhāvake*

2 Tib literally *pinda* (or *anna*)-*dānam ṣadvidham* (zas sbyin pa ni rnam, pa drug ste) Here *pinda* means food Evidently *pindila* (*pinda-la* √ *lā* to give) is 'a food-giver' from which we have here the noun *paindilya* The word *pindila* may be also from *pinda* with the secondary suffix-*la* giving the same sense In Pāli we have *pindola* of uncertain etymology meaning 'one seeking alms' as in the Pali Text Society's Dictionary, 'food-giver' and then it gradually changed to *pindila*,

3 Tib yi dam can la sbyin pa dan MS *apādāna*°

4 Tib gnod pa for Skt *patita*, but the Tib word is generally found in the sense of '*bādhita*', '*vighāta*', '*aśiva*', etc

5 Tib. ran. bžin gyis phons pa la, literally meaning *nisarga-daridra*

6 MS omits it Tib yul dan bral bar gnas. pa la. zas sbyin pa dan. It may be translated into Sanskrit as above, but the meaning is not quite clear.

7 For °*anupaghāta* Tib *upaghāta* (hgro bai gnod pa.)

8 Tib metog phren ba means *puspamālya*

9 Tib hgags pa. (?) Instead of six here are only five.

३३ ख, Tib. 61b. 5

[3] चत्वार्यमित्रलक्षणानि। कोपाशयानुत्सर्गः। इष्टविप्रतिबन्धावस्थानं। अनिष्टोपसंहारः। अपथ्योपसंहारश्च॥

एतद्विपर्ययेण [4] चत्वार्येव मित्रलक्षणानि वेदितव्यानि॥

त्रिविध उपसंहारः। उपकरणोपसंहारः। सप्रीतिकसुखोपसंहारः। निष्प्रीतिकसुखोपसंहारः[1]॥

[5] अपि खलु चत्वार इमेऽनुवृत्त्यनुगमाः। तद्यथा। अतिथि-[2]जनानुवृत्त्युपगमः। परिजनानुवृत्त्युपगमः। गुरुजनानुवृत्त्युपगमः [6] सभ्यजनानुवृत्त्युपगमश्च॥

एष खलु चतुर्ष्वनुवृत्त्युपगमेषु चत्वारि स्थानानि निश्रित्य पञ्चविधं फलं वेदितव्यं। [तद्यथा][3] अनुग्रहं। अविहेठनां।[4] पूजनां। [7] [सम-][5] सभागानुवर्तनं च। इमानि निश्रित्य महाभोगता। दिग्विदिक्षु यशः। अपरिक्लेशः। निर्वाणप्राप्तिः[6]। सुगतिगमनं च। पुनरिदं पञ्चविधं फलं निर्वर्तते।

[Tib 62b 1] त्रीणीमानि पण्डितस्य पण्डितलक्षणानि। कुशलसमादानता। कुशलैकान्तिकता। कुशलदृढता च॥

पुनस्त्रीणि। [2] अधिशीलसमादानता। अधिचित्तसमादानता। अधिप्रज्ञासमादानता च॥[7]

---

1 Tib adds here the following bži po hdi dag ni mkhas pas bstan pa yin žes bya ba mdo hdihi. rnam par bśad pa ni It is not quite clear, but seems to mean These four are said by a learned one that this *sūtra* is explained

2 For hgron. in the Xylograph read mgron

3 Tib hdi lta ste

4 Tib phan gdags pa , MS *anāgrāham.* In the following line instead of the accusative the nominative case is expected

5 Instead of five we have here only four fruits (*phalas*) Partly the Xylograph is here illegible, only the following can be read mñam pa dan

6 As suggested by Tib *apariklesá* and *nirvānaprāpti* are to be taken separately and not together as MS reads *apariklesánirvāna-prāptih*

7 Here in the Xylograph ends the Section VI (bam po drug pa)

[ अयोनिशो मनस्कारप्रज्ञप्तिः ]

तत्रायोनिशो मनस्कारप्रज्ञप्तिव्यवस्थापनं कतमत्। तत्रोद्दानं।

हेतौ फलमभिव्यक्ति[3]रतीतानागतास्तिता।
आत्मा च शाश्वतं कर्म ईश्वरादिविहिंसता॥
अन्तानन्तं च विक्षेपः अहेतूच्छेद[1]नास्तिता।
अग्रं शुद्धिश्च मङ्गल्यं परवादाश्च षोडश॥

[ षोडश परवादाः ]

[2]षोडश इमे [4] परवादाः। तद्यथा। हेतुफलसद्वादः। अभिव्यक्तिवादः। अतीतानागतद्रव्यसद्वादः। आत्मवादः। शाश्वतवादः। पूर्वकृतहेतुसद्वादः। ईश्वरादि[ 5 ]कर्तृकवादः। विहिंसा[3]धर्मवादः। अन्तानन्तिकवादः। अमराविक्षेपवादः।[4] [6]अहेतुवादः। उच्छेदवादः। अग्रवादः। शुद्धिवादः। कौतुक[7]मङ्गलवादश्च॥

[ हेतुफलसद्वादः ]

हेतुफलसद्वादः कतमः। यथापीहैकत्यः श्रमणो ब्राह्मणो वा एवंदृष्टिर्भवत्येवं-

1 Tib rgyu med chad, MS *sahetuccheda*.

2 Tib reads once more *ṣoḍaśa ime paravādā*

3 Tib rnam par ḥtshe ba, MS hiṃsā°

4 Tib mthaḥ mi spon ba smra ba, but lit it appears to suggest *antāprahāṇa-* (or *antāvikṣepa-*)*vāda*, but not *amarāvikṣepa°* However later on in Tib *amarāvikṣepa* is lha mi spon smra ba (Tib 68b 5). It is clear from it that the word is to be explained as *amara-vikṣepa* (=*atyāga*) On the term *amarāvikṣepa*, Pali *°vikkhepa*, Buddhaghosa writes in his Sumangalavilāsinī, PTS, Part I, p 115 Na maratīti amarā Kā sā ? Evam 'pi me no 'ti ādinā nayena pariyantarahitā diṭṭhigatikassa diṭṭhe c'eva vācā vā vividho khepo 'ti vikkhepo Amarāya diṭṭhiyā vacāya vā vikkhepo 'ti *amarāvikkhepo* So etesam atthīti *amarāvikkhepikā* Aparo nayo Amarā nāma macchajāti, sā ummajjananimujjanādivasena udake sandhāvamānā gahetum na sakkā 'ti Evam eva ayam 'pi vādo ito c'ito ca sandhāvati gāham na upagacchātīti *amarāvikkhepo* 'ti vuccati So etesam atthīti *amarāvikkhepikā*

३ ख, Tib. 62b 2

वादी[1] नित्यं नित्यकालं ध्रुवं ध्रुवकालं विद्यत एव हेतौ फलमिति [ ३४ क ] तद्यथा वार्षगण्यः[2] ॥

ते पुनः केन कारणेन हेतौ फलं पश्यन्ति व्यवस्थापयन्ति परिदीपयन्ति । यदुतागमतो युक्तितश्च ॥

आगमः कतमः । तत्प्रतियुक्तानुश्रव-[Tib 63a 1]परम्परापिटकसम्प्रदानयोगेनैषामागतं भवति विद्यत एव हेतौ फलमिति ॥

युक्तिः कतमा । यथा स एव श्रमणो वा ब्राह्मणो वा तार्किको भवति मीमांसकस्तर्कपर्यायपन्नायां भूमौ स्थितः स्वयं प्रातिभानिक्यां [2] पार्थग्जनिक्यां मीमांसानुचरितायां । तस्यैवं भवति । येभ्यो भावेभ्यो ये भावा उत्पद्यन्ते ते तेषां कारणत्वेन प्रसिद्धाः प्रज्ञाप्यन्ते च । [न][3] तदन्ये । तस्य च फलस्यार्थे [3]फलार्थिभिरुपादीयन्ते न तदन्ये । त एव च तेषु तेषु कृत्येषु विनियुज्यन्ते न तदन्ये । तेभ्यश्च तत्फलमुत्पद्यते न तदन्येभ्यः । अत[4]-स्तत्फलं तस्मिंस्तस्मिन् । अन्यथा हि सर्वं सर्वस्य कारणत्वेन व्यवस्थाप्येत । सर्वमुपादीयेत । सर्वं कृत्ये विनियुज्येत । सर्वतः सर्वमुत्पद्येतेति ॥

प्रज्ञप्तितश्चोपा[5]दानतश्च कृत्यविनियोगतश्चोत्पत्तितश्च नित्यकालं हेतौ फलं पश्यन्ति[4] ॥

स इदं स्याद्वचनीयः कच्चिदिच्छसि हेतुलक्षणं फललक्षणं[5] हेतोर्वा पुनः फललक्षणमभिन्नलक्षणं वा भिन्नलक्षणं वा । स चेदभिन्नलक्षणं । तेन नास्ति हेतुनियमः । फलनियम इति निर्विशिष्टत्वाद्धेतुफलयोर्हेतौ फलं विद्यत इति न युज्यते । सचेद्भिन्नलक्षणं । तेन कच्चिदिच्छसि अनुत्पन्नलक्षण वोत्पन्न-

1 MS here *-vacī*

2 MS Vaisaganya He was the master of Vindhyavāsa of the Sānkhya school According to A B Keith (*Karmamīmāṃsā*, p 59 ; Bulletin of the School of Oriental Studies, 1924, p 554) Vindhyavāsa or Vindhyavāsin was not a doctor of the Sānkhya School On this see Takakusu, Life of Vasubandhu, JRAS, 1905, January Vindhyavāsa is said to have been the victorious rival of Vasubandhu

3 Tib ma yin no

4 MS Singular number.

5 Tib omits *phalalakṣanam*

३३ ख, Tib. 62b 7

लक्षणं वा । स चेदनुत्पन्नलक्षणं । तेन हेतौ फलमनुत्पन्नमस्तीति न युज्यते ॥ स चेदुत्पन्नलक्षणं । तेन हेतौ फलमुत्पद्यत [Tib 63b 1] इति न युज्यते । तस्मान्नास्ति हेतौ फलं । हेतौ तु सति प्रत्ययमपेक्ष्योत्पद्यते । तत्र विद्यमानलक्षणो धर्मो विद्यमानलक्षणे धर्मे पश्चाकारेण लक्षणेन वेदितव्यः । तद्देश उपलभ्यते । तद्यथा । कुम्भे [2] सलिलं । तदाश्रये वोपलभ्यते । तद्यथा चक्षुषि चक्षुर्विज्ञानं । तथैव वा स्वेन लक्षणेनोपलभ्यते । तद्यथा हेतुर्नानुमेयो भवति । स्वं च कर्म करोति । विक्रियमाणे च [3] हेतौ विकारमापद्यते विकारप्रत्ययैर्वा । तस्मादपि नित्यकालं ध्रुवकालं विद्यत एव हेतौ फलमिति न युज्यते । अनेनापि पर्यायेणायोगविहित[1] एवैष वाद इत्यविशिष्ट[4]-लक्षणतोऽपि विशिष्टलक्षणतोऽपि [३४ ख] अनुत्पन्नलक्षणतोऽपि उत्पन्नलक्षणतोऽपि न युज्यते ॥

### [ अभिव्यक्तिवादः । ]

अभिव्यक्तिवादः कतमः । यथापीहैकत्यः श्रमणो वा ब्राह्मणो वा [5] एवंदृष्टिर्भवत्येवंवादी । विद्यमाना एव भावा अभिव्यज्यन्ते नोत्पद्यन्ते । तद्यथा स एव[2] हेतुफलसद्वादी शब्दलक्षणवादी च ॥[3]

केन कारणेन हेतुफलसद्वादी हेतौ विद्यमानस्य फलस्याभिव्यक्तिं पश्यति । आगमतो युक्तितश्च । आगमः पूर्ववद्द्रष्टव्यः ॥

युक्तिः कतमा । यथापीहैकत्यः स्वयमेव तार्किको भवति मीमांसक इति । पूर्ववद्विस्तरः । तस्यैवं भवति । [6] नहि हेतौ[4] फलस्य विद्यमानस्योत्पत्तिर्युज्यते । न च न क्रियते प्रयत्नः फलनिष्पत्तये । तच्च किंनिमित्त क्रियत इति । यावदेवाभिव्यक्त्यर्थं इति । स एवं परिकल्प्या[5]भिव्यक्तिवादी भवति ॥

तत्र [Tib 64a 1] हेतुफलाभिव्यक्तिवादीदं स्याद्वचनीयः । कच्चिदिच्छस्य-सत्यावरणकारण आवरणं सति वा । सच्चेदसति । असत्यावरणकारण आवृतमिति

---

1 Tib suggesting *avidyājanita* (rig pa ma yin pas bskyed pa)
2 Tib de ñid, MS *sata eva*
3 The Sāṅkhyas and the grammarians See *Sāṅkhyakārikā* 9
4 Tib. (rgyu. la) suggests both *hetau* and *hetoḥ*, MS has the latter.
5 MS adds *yena*, but it is not found in Tib

[2]न युज्यते। सचेत्सति। फलसम्बद्धं हेतुं [किं][1] नावृणोति। तस्य सत्त्वे[2]ऽपि न युज्यते। यथान्धकारं कुण्डे पानीयमावृण्वत्कुण्डमप्यावृणोति। स चेत्पुन[3]र्हेतुरप्यावृत आवरणकारणेन। तेन हेतौ फलं विद्यमानमभिव्यज्यते। [न हेतुरिति न युज्यते ॥][3] स इदं स्याद्वचनीयः। किं[4] विद्यमानतावरणकारणमाहोस्वित्फलता। सचेद्विद्यमानता[4]वरणकारणं तेन [न][5] नित्यकालमभिव्यक्तिर्विद्यमानस्येति न युज्यते हेतुरपि विद्यते। सचेत्फलता।[6] तेन स एव हेतुर्भवत्येकस्य स एव फलं। [5] तद्यथाङ्कुरो बीजस्य फलं दण्डा[7]दीनां हेतुः। तेन स एवाभिव्यक्तः स एवानभिव्यक्त इति न युज्यते ॥

तस्मादेवं[8] वचनीयः। [6] कच्चिदिच्छसि तस्माद्धर्मादभिव्यक्तिमनन्या-[मन्यां][9] वा। सचेदनन्यां। नित्याभिव्यक्तो धर्मोऽभिव्यज्यत[7]इति न युज्यते। सचेदन्यां[10] तेन सा सहेतुका निर्हेतुका वा। स चेन्निर्हेतुका। तेन निर्हेतुकाभिव्यक्तिर्न युज्यते। स चेत्सहेतुका। तेन [Tib 64b 1] फल[11]भूतयाभिव्यक्तयानभिव्यक्ततयाभिव्यक्तिर्न युज्यत इति ॥

तस्मा[12]दावरणकारणासद्भावतोऽपि। आवरणकारणसद्भावतोऽपि। विद्यमानलक्षणतोऽपि। फललक्षणतोऽपि। अभिव्यक्त्र[2]नन्यतोऽपि[13] अभिव्यक्त्रन्यतोऽपि न युज्यते ॥

---

1 Tib cihi phyir 2 Here *tasya sattve'pi* is omitted in Tib.

3 Tib rgyu gsal bar mi. byed ces byar (=bya. bar ?) mi. run no 4 Tib ci , MS *kimtu*.

5 As in Tib. (yod pa. ni dus thams. cad du mnon par gsal bar. ma yin par. hgyur bas mi run. no).

6 Tib adds *āvaranakāranam* (sgrib. pahi rgyu, yin. ni.).

7 Tib sdon-bu. 'stalk' Here *danda* means 'stalk'

8 Tib de las hdi. skad. ces. MS *sa idam syāt*

9 Tib supports the reading fully reading ci. chos de las. mnon par. bsal ba tha dad pa ma yin. pa ham / hon te tha dad par. hdod / gal te tha dad pa. ma. yin. na. ni. The MS reads for *ananyām* in this and in the following cases *anantyām*

10 For *anyām* Tib lit *tadbhinnām*

11 The word *phala* in Tib is repeated (hbras bu hbras bur. gyur.) 12 Tib. des na MS omits it

13 Tib mnon par. bsal bar. tha. dad. pa. ma. yin pa. dan MS abhivyaktyanyato' pi

३४ख, Tib. 64a. 2

तस्माद्यो भावो नास्ति स नास्त्येव तल्लक्षणः। यो भावोऽस्ति सोऽस्त्येव [३५क] तल्लक्षणः। असतो नास्तित्वमेवानभि[3]व्यक्तिः। सतोऽस्तित्वमेवाभिव्यक्तिः॥

सतस्तु यथाऽग्रहणं भवति तल्लक्षणं वक्ष्यामि। विप्रकर्षादपि सतोऽग्रहणं भवति। चतुर्भिरावरणकारणैरावृतत्वादपि। [4] [1]सूक्ष्मादपि चित्तविक्षेपादपि। इन्द्रियोपरमरमोपघातादपि। तत्प्रतिसंयुक्तज्ञाना[2]प्रतिलम्भादपि[3]॥

[5] यथा हेतुफलाभिव्यक्तिवाद एवं शब्दाभिव्यक्तिवादोऽप्ययुज्यमानो द्रष्टव्यः। तत्रायं विशेषः। शब्दवादी व्यवस्थितशब्दलक्षणं पश्यति यथैव प्रज्ञप्तं। [6]तस्य व्यवस्थितस्य पुनः पुनरभिधान[4]योगेनोच्चारणा[5]दभिव्यक्तिरिति पश्यति। येनास्यैवं भवति नित्यः शब्द इति तस्मादभिव्यक्तिवादोऽप्ययोगविहितः॥

[अतीतानागतद्रव्यसद्वादः]

अतीतानागतद्रव्यसद्वादः कतमः। यथापीहैकत्यः श्रमणो वा ब्राह्मणो वा[7] इह धार्मिको वा [6]पुनरयोनिश एवंदृष्टिर्भवत्येवंवादी। अस्त्यतीतं। अस्त्यनागतं।[7]

---

1 Tib adds *anālokakarāt* (mi. snan. bai byed pa dan) abhibhavāc caksurvisamvādāvaranāt (mi snan bar byed. pa dan | zil gyis gnon pa. dan / mig slu bar byed pas. bsgribs. pa dan /)

2 MS °samyuktājñānā°

3 For *pratilambha* Tib has here byun ba *utpatti*

4 Tib brjod pahi MS *abhidhāna*

5 Tib smra ba las. MS *uccāranā*

6 Here is something confounded Tib. reads chos hdi la. kha cig kyan hdas pa. yan yon, and it lit. means asti kaścid iha atīto'pi dharmah The Sanskrit here is as follows *iha dhārmiko vā punah* This occurs again just after a few lines Now here in both the places in the Tib text we have lit *dharmah* (chos) and not *dhārmikah* (chos. ldan or chos dan ldan pa though the latter is required The first Tib sentence quoted above seems to have been confounded somehow or other with the short sentence *asty atītam* after °evamvādī

7 Here the *Sarvāstivāda* 'the Doctrine of Existence of All' is referred to It is propounded by some of the Buddhist teachers, but is not accepted in true Buddhism (*na śāsane sādhuh*) The real

३५ क, Tib. 64b. 1

लक्षणेन परिनिष्पन्नं। यथैव प्रत्युत्पन्नं। द्रव्यसत्। न प्रज्ञप्तिसत्॥

[Tib 65a 1] केन कारणेन स एवंदृष्टिर्भवत्येवंवादी। आगमतो युक्तितश्च॥

---

significance of the word *sarva* in *sarvam asti* 'all exists' is the twelve *āyatanas*, i e , six organs of sense (*indriyas*) and six objects (*viṣayas*) See here our text as well as Kośa, v, p 64.

There are four schools of Sarvāstivāda headed respectively by (1) Bhadanta Dharmatrāta (2) Bhadanta Ghosaka, (3) Bhadanta Vasumitra, and Buddhadeva Dharmatrāta holds that while the thing undergoes changes it remains substantially the same (*bhāvānyathāvādin* or *bhāvānyathika*) For instance the substance gold undergoes many changes through which it is called variously as 'armlet', 'necklace', 'ear-ring' etc but there is no change in the gold itself Cf the Pariṇāmavāda of the Sānkhyas and Jinists with special reference to the doctrine of *dravya* and *paryāya* of the latter

Ghosaka upholds the view that the changes undergone by an object are in its character (*lakṣaṇānyathāvādin* or *lakṣaṇānyathika*). He argues that when the object has entered into its course of existence, it is said to be 'past' it has the character of the 'past' but it is not entirely deprived of the character of the 'future' and the 'present', for example, a man may be attached to a woman, but he need not be disgusted with other women Similarly when the object is 'future' or 'present' it has these characters, but it is not entirely devoid of the other two characters. The difference between this view and the previous one is that under this view things are regarded as 'past' on account of the actual presence of a particular character

Vasumitra says that the changes undergone by things are in their aspects or states (*avasthānyathāvādin* or *avasthānyathika*) He argues saying that when a thing enters the course of existence it is spoken of variously according to its varying aspects or conditions (*avasthās*) and these variations relate to the aspect and not to the substance as the substance remains the same at all the three points of time For example, when a very small ball of clay that is used for counting (*mṛd-gudikā*) is placed in the place of the number one

३५ क, Tib. 64b. 7

आगमः कतमः। [स][1] पूर्ववद्द्रष्टव्यः[2]।

इह धार्मिको वा [2] पुनः सूत्रान्तानयोनिशः कल्पयति। तद्यथा। सर्वमस्तीति द्वादशायतनानि[3]। द्वादशायतनानि लक्षणतो विद्यन्ते। तद्यथा अस्त्य-

---

it is denominated one , when it is placed in the place of the number one hundred it is denominated one hundred, and when it is placed in the place of the number one thousand it is called one thousand. Similarly when the thing is in the state of activity (*kāritra*) it is called 'present', when it has ceased from activity it is 'past' and when it has not yet come to the state of activity it is 'future' So such expressions are in accordance with the states, though there is no change in the nature of the substance

Buddhadeva maintains the view that the changes are mere relative, not substantial (*anyathānyathika*) and explains it saying that when an object enters into the course of existence it is called one or the other in relation to what has gone before and what is to come. For instance, the same woman is called mother as well as daughter.

The above four teachers may be described in brief as (i) Mode changer, (ii) Character changer, (iii) Aspect changer and (iv) Relative changer respectively.

See *Tattvasamgraha* with *Pañjikā*, 1786 ff. , Kośa, v, pp. 52 ff., See also the first work, 1788 ff. For the origin of the *Sarvāstivāda* one may be referred to the same work, 1788-1790 For the *bhāvānyathāvāda*, *laksanānyathāvāda* and *avasthānyathāvāda* of Dharmatrāta, Ghosaka and Vasumitra respectively, cf. *dharma parināma*, *laksana*°, and *avasthā*° respectively in the commentary of Vyāsa on the *Yogasūtra*, III, 13

1 Tib. adds *tat* (de.)

2 See above

3 Mahāniddesa, Vol. I, p. 133 Sabbam vuccati dvādasāyatanāni cakkhu c'eva rūpāca sotam ca saddā ca ghānam ca gandhā ca jivhā ca rasā ca kāyo ca photthabbā ca mano ca dhammā ca Samyuttanikāya, IV. 13. Kim ca bhikkhave sabbam ? cakkhum c'eva rūpā ca. Sotam ca saddā ca, ghānam ca gandhā ca, jivhā ca rasā ca, kāyo ca poṭṭhabbā ca, mano ca dhammā ca idam vuccati bhikkhave sabbam. On this see also Majjhima, i 3, and Kośa, v, p. 64.

तीतं कर्मे[1]त्युक्तं भगवता। तद्यथा [3] अस्त्यतीतं रूपमस्त्यनागतं यावद्विज्ञानं[2] ॥

युक्तिः कतमा। यथापीहैकत्यस्तार्किको भवति मीमांसक इति पूर्वे[4]वत्। तस्यैवं भवति। यो धर्मो येन लक्षणेन व्यवस्थितः [स][3] तेन परिनिष्पन्नः। सचेत्सोऽनागतो न स्यात्तेन तदानुपात्तस्वलक्षणः स्यात्। सचे[5]दतीतो न स्यात्तेन तदा विहीनस्वलक्षणः स्यात्। एवं स सत्यपरिनिष्पन्नस्वलक्षणः स्यात्। तस्मादपरिनिष्पन्नस्वलक्षणः स्यादिति न युज्यते। येन [6] स एवंदृष्टिर्भवत्येवंवादी अस्त्यतीतमपि। अस्त्यनागतमपीति ॥

स इदं स्याद्वचनीयः। कच्चिदिच्छस्यतीतानागतलक्षणं वर्तमानलक्षणादभिन्नलक्षणं वा भिन्नलक्षणं वा। [7] स चेदभिन्नलक्षणं। त्र्यध्वव्यवस्थानं लक्षणस्य न युज्यते। स चेद्भिन्नलक्षणं परिनिष्पन्नलक्षणं न युज्यते ॥

स इदं[4]स्याद्वचनीयः। कच्चि[Tib 65b. 1]दध्वपतितं धर्मं नित्यलक्षणमिच्छसि[5] अनित्यलक्षणं वा। स चेन्नित्यलक्षणं त्र्यध्वपतितमिति न

---

1 See Tattvasaṃgraha, 1851 asti karmeti° and its *Pañjikā* with the Eng Tr by Ganganath Jhā yady evam katham uktam bhagavatā asti tat karma yat kṣīnam yat niruddham viparinatam iti See here the following from the *Saṃyuktāgama*, iii 14 (cited in Kośa, v p 51 and Wogihara's AKV, pp 468-9) rūpam anityam atītam anāgatam/ kah punarvādaḥ pratyutpannasya/ evamdarśī śrutavān āryaśrāvako'tīte rūpe 'napekso bhavati/ anāgatam rūpam nābhinandati/ pratyutpannasya rûpasya nirvide virāgāya nirodhāya pratipanno bhavati/ atītam ced bhiksavo rūpam nābhavisyan na śrutavān āryaśrāvako'tīte rūpe 'napekso'bhavisyat/ yasmāt tarhy asty atītam rūpam tasmāt śrutavān āryaśrāvako atīte rūpe 'napekso bhavati/ anāgatam ced rūpam nābhavisyan na śrutavān āryaśrāvako 'nāgatam rūpam nābhyanandisyat, yasmāt tarhy asty anāgataṃ rūpam tasmāt śrutavān āryaśrāvako 'nāgatam rūpam nābhinandati/ pratyutpannam ced bhiksavo rūpam nābhavisyad iti vistarah

This passage is quoted also in the Madhyamakavrtti, xxii 11.

2 After this Tib adds *ayoniśah prekṣate* (tshul bžin ma yin par rtog go).

3 Tib. de ni.

4 Tib adds *ca* or *api* (kyan).

5 MS *icchati* for *icchasi*

३५ क, Tib. 65a. 2

युज्यते। स चेदनित्यलक्षणं। तेन त्रिष्वध्वसु [2] तथैव विद्यत इति न युज्यते ॥

स इदं[1] स्याद्वचनीयः। कच्चिदनागतस्य वर्तमानमध्वानमागतिं वा पश्यसि। च्युत्वा वोपपत्तिं[2] तथैव वा स्थितेऽनागते तं प्रतीत्य वर्तमानोत्पत्तिं। अकर्मकस्य वा सकर्मकत्वं।[3] [3] असम्पूर्णलक्षणस्य वा सम्पूर्णलक्षणत्वं। [4]विलक्षणस्य वा विलक्षणत्व। [5]अनागतभूतस्य वर्तमानभावः। [6]सचेदागच्छति। [4] तेन देशस्थश्च भवति। वर्तमाननिर्विशिष्टश्च। [7]शाश्वतश्चेति न युज्यते। स चेच्च्युत्वोपपद्यते तेनानागतश्च नोत्पन्नो भवति। अपूर्वश्चोत्पन्नो भवति। अनुत्पन्नश्च[5]च्युतो भवतीति[8] न युज्यते। स चेत्तथैव [तत्र][9] स्थितः[10] प्रतीत्योत्पद्यते। न शाश्वतश्च[11] भवति। अपूर्वश्चोत्पन्नो भवति। अनागतश्चोत्पन्नो [न][12]भवतीति न युज्यते। [6] सचेदकर्मको वा भूत्वा सकर्मको भवति। तेनाभूत्वा भाव एकत एव[13] यथोक्ता दोषा इति न युज्यते। [३५ख] तच्च कर्म कच्चिदिच्छसि तस्माद्भिन्नलक्षणं अभिन्नलक्षणं वा। [7] सचेद्भिन्नलक्षण। तस्यानागतलक्षणं नास्तीति न युज्यते। स चेदभिन्नलक्षणं। तेनाकर्मको भूत्वा सकर्मको भवतीति न युज्यते ॥

---

1 Tib, *evam api* (hdi skad kyan).

2 Here *upapatti* is to be taken in the sense of *utpatti* (Tib skye) as well-known in Buddhist works

3 Tib las. mi byed. pa žig las / las. byed pai hgyur ra It is not quite clear

4 mtshan ñid ma. rdsogs pa žig las mtshan ñid rdsogs pai hgyur ram

5 mtshan. ñid. ma hdra ba las / mtshan. ñid mi hdra ba ma. yin pai hgyur ram/

6 ma. hons pai gyur pa žig da ltar gyi dnos por hgyur

7 The text may suggest also °*nirviśesaś ca* (bye brag. med)

8 Tib adds *so'pi* (de. yan).

9 Tib de la. 10 MS *sthitam*.

11 Here Tib reads *tena śāśvataś ca* (des na ther zug. par).

12 Tib ma skyes pahi. phyir

13 Tib. omits these two words.

३५ क, Tib. 65b. 1

[Tib. 66a 1] यथाकर्मक एवं[1] सम्पूर्णलक्षणो विलक्षणोऽनागतभावलक्षणो [2]वेदितव्यः। तत्रायं विशेषः स्वभावसङ्करदोष इति न युज्यते। यथा [2]ऽनागतं वर्तमानं च एवं वर्तमानमतीतं च यथायोगं दोषयुक्तं द्रष्टव्यमेभिरेव कारणैरनेनैवोत्तरमार्गेणेति स्वलक्षणतोऽपि। सामान्यलक्षणतोऽपि। आगतितोऽपि। [3] च्युतितोऽपि। प्रतीत्योत्पत्तितोऽपि। कर्मतोऽपि। सम्पूर्णलक्षणतोऽपि। विलक्षणतोऽपि। अनागतभावतोऽप्यतीतानागतद्रव्यसद्भावो न युज्यते॥

एवं व्याकृते च पुनः सत्युत्तरि [4] वदेत्। स चेदतीतानागतं नास्ति। कथमसदालम्बना[3] बुद्धिः प्रवर्तते। सा च पुनः प्रवर्तते। तत्कथमागमविरोधो न भवति। यदुक्तं सर्वमिति यावदेव द्वादशायतनानीति।[4] स इदं स्याद्वचनीयः। [5] कच्चिदिच्छसि नास्तीतिग्राहिकाया बुद्धे[5]र्लोकेऽप्रवृत्तिं वा प्रवृत्तिं वा। सचेदप्रवृत्तिं। तेन या नैरात्म्यग्राहिका शशविषाणवन्ध्यापुत्रादिग्राहिका [6] बुद्धि[6]र्नैवास्तीति न युज्यते। यदप्युक्तं सर्वमस्ति यावदेव द्वादशायतनानीति तदपि सति सल्लक्षणास्तितां [7] सन्धायोक्तं। असति [7]चासल्लक्षणास्तितां। तथाहि सल्लक्षणा अपि धर्माः सल्लक्षणं धारयन्ति। [Tib 66b 1] असल्लक्षणा अपि धर्मा असल्लक्षणं धारयन्ति। तस्माद्धर्मा इत्युच्यन्ते। [2] अन्यथा तु [३६क] सतो ज्ञानादसतश्चाज्ञानाद् योगिनो [3] न निरन्तरज्ञेयधर्मपरीक्षा स्यादिति न युज्यते॥

यदप्युक्तमस्त्यतीतं कर्म यतः [4] सत्त्वाः सव्याबद्धा व्याबाधां[8]

---

1 Not supported by Tib.

2 Tib adds *api tatsarūpah* (kyan de dan hdra ba).

3 Tib lit *anālambanā* (dmigs pa med pa)

4 See *infra*

5 MS °*grāhikā yad bu*° 6 Tib. med pa la, MS *sati ca*

7 Here in Tib from line 6 to line 2 of the next side some thing different is inserted It is, however, not clear

8 This reading is doubtful. Here in *savyābaddhā* as in MS, *vyābaddha* is neuter Cf Pali *vyāpajjha* 'suffering' which is for Skt *vyābādhya*. Childers (Dic) thinks here is a confusion between the √*bādh* and √*pad*, both with the prefix *vi*- In such cases in Pali (Majjhima Nikāya, II, p 419) *byābādha* (Skt

३५ ख, Tib 66a 1

वेदयन्तीति। [5] तत्रापि तद्वासनायां तदस्तित्वोपचारमभिप्रेत्योक्तं। येषु संस्कारेषु यच्छुभाशुभं कर्मोत्पन्ननिरुद्धं भवति तेन हेतुना तेन प्रत्ययेन [6] विशिष्टा संस्कारसन्ततिः प्रवर्तते सा वासनेत्युच्यते। यस्याः प्रबन्धपतिताया इष्टानिष्टफलं निर्वर्तते[1] इति न युज्यते। ततोऽपि नास्ति दोषः॥

यदप्युक्तमस्ति रूपमतीतमस्त्यनागत[7]मस्ति प्रत्युत्पन्नं एवं यावद् विज्ञानमिति[2]। तत्रापि त्रिविधं संस्कारलक्षणं सन्धायोक्तं। हेतुलक्षणं स्वलक्षणं फललक्षणं च। [Tib 67a 1] हेतुलक्षणं सन्धायोक्तमस्त्यनागतमिति। स्वलक्षणास्तितां सन्धायोक्तमस्ति प्रत्युत्पन्नमिति। फललक्षणं सन्धायोक्तमस्त्यतीतमिति। [2] अतोऽपि न दोषः॥

अपि चैवमयुज्यमाने द्रव्यतोऽतीतानागतलक्षणे द्वादशाकारमनागतलक्षणं वेदितव्यं। हेतुप्रभावितं। अनुत्पन्नशरीरं। [3] प्रत्ययापेक्षं। उत्पन्नजातीयं। उत्पत्तिधर्मकमपि। अजातसंक्लेशं। अजातव्यवदानं। प्रार्थनीयमपि। अप्रार्थनीयमपि। परीक्ष्यमपि [4] अपरीक्ष्यमपि।

द्वादशाकारमेव प्रत्युत्पन्नलक्षणं। फलप्रभावितं। उत्पन्नशरीरं। समवहितप्रत्ययं। उत्पन्नजातीयं। क्षणिकं। अनुत्पत्तिधर्मकं। समवहित[5]संक्लेशं[4]। समवहितव्यवदानं। अपेक्षास्थानीयं। [5]अनपेक्षास्थानीयमपि[6] परीक्ष्यं। अपरीक्ष्यमपि[7]।

---

*vyābādha*), the form is clearly from *vi-ā√bādh* We have in the *Divyāvadāna* (ed. Cowell and Neil, 1886, p 105, l. 12) *vyābādhate*. From this it appears that the actual reading here is *savyābādhyā vyābāddhām*. For these two words Tib. reads . gnod pa. dan bcas pa dan / gnod pa med pahi. This suggests savyābādhā abādhām.

1 Tib. grub. par. hgyur. lit. *sidhyati* It does not agree with the MS *nivartate*. According to Tib. quoted the reading will be *nirvartate*.

2 See above

3 Tib does not support *api* in the five cases

4 Tib ldan

5 MS adds here *ā*-.

6 Tib yid du hon ba dan

7 Tib. adds yid du. mi. hon ba , lit *anistam*.

३६ क, Tib. 66b. 4

[अतीतलक्षणमपि द्वादशाकारं वेदितव्यं ।[6] अतीतहेतुकं । अतीतप्रत्ययं । अतीतफलं । विनष्टशरीरं । निरुद्धस्वभावं । अनुत्पत्तिधर्मत्वं । संशान्तसंक्लेशं । संशान्तव्यवदानं । [7] अपेक्षास्थानीयं (?) । अनपेक्षास्थानीयं (?) । परीक्ष्यं । अपरीक्ष्यं च ॥ ][1]

[ आत्मवादः ]

आत्मवादः कतमः । यथापीहैकत्यः श्रमणो वा ब्राह्मण एवंदृष्टिर्भवत्येवंवादी । तद्यथा । [Tib 67 b 1] इतो बाह्यस्तीर्थ्यैः सत्यतः स्थितित आत्मा वा सत्त्वो वा जीवो वा पोषो वा पुद्गलो वेत्यादि ।[2] स [कस्माद्][3] एवंदृष्टिर्भवत्येवंवादी [2]आगमतो युक्तितश्च ॥

तत्रागमः पूर्ववत् । युक्तिः कतमा । यथापीहैकत्यस्तार्किको भवति मीमांसक इति पूर्ववत् । द्वाभ्यां कारणाभ्यां ।[4] अबुद्धिपूर्वं च सति सत्त्वबुद्धिप्रवृत्त्युप[3]लब्धितः । बुद्धिपूर्वं च [5]चेष्टोपलब्धितः । तस्यैवं भवति । सचेदात्मा न स्यात् पञ्चभिराकारैः पञ्चविधवस्तुदर्शने सत्यात्मबुद्धि[र्न][6] प्रवर्तेत । रूपा[4]कृतिं दृष्ट्वा रूपबुद्धिरेव प्रवर्तेत न सत्त्वबुद्धिः । सुखदुःखावदीर्णं[7] संस्कारं दृष्ट्वा संज्ञाबुद्धिरेव प्रवर्तेत [न] सत्त्वपतितोच्छ्रितबुद्धिः । वेदनादिबुद्धिरेव प्रवर्तेत । न सत्त्वपतितोच्छ्रित[8]बुद्धिः [5] । नामिनं नामसम्बद्धं संस्कारं दृष्ट्वा संज्ञाबुद्धिरेव

---

1 Tib hdas pa la yan mtshan ñid rnam bcu. gñis. yod. par rig par bya ste / rgyu hdas pa dan/ rkyen hdas pa. dan / hbras. bu hdas pa. dan/ lus žig pa. dan / hgags. pahi. ran bžin, can. dan /ma skye bahi chos. can dan. /kun. nas ñon mons pa. rnam par ži ba. dan / rnam par byan ba. rnam par ži. ba. dan/ bltos rnam. par byan ba rnam par ži ba. dan / bltos. pa. hi. gnas blta. bu. dan / bltos pa ma. yin. pahi gnas lta bu. dan / brtag. tu run ba dan / brtag tu run ba. ma yin. paho //

2 Mahāvyutpatti CCVIII Tib de la sogs pa , MS *ity evamādikena kāranena*

3 Tib cihi phyir.

4 Tib *ākārābhyām* (rnam. par gñis. kyis ) for *kāranābhyām*

5 For *cestā* Tib. lit *vicāra*-(dpyod).

6 Tib. hjug par. hgyur bahi mi. rigs. , MS omits *na*.

7 For *avadīrnam* Tib lit *ksubdham* (gyo. ba.)

8 In Tib. for *ucchrita* (mthos) 'high' is wrongly thos pa. meaning *śruta*.

२६ क, Tib. 67a. 5

प्रवर्तेत । [न] क्षत्रियो वा ब्राह्मणो वा वैश्यो वा शूद्रो वा ब्रह्मदत्तो वा गुण[6]-मित्रो वेति सत्त्वबुद्धिः । शुभाशुभचेष्टासम्बद्धं [२६ख] संस्कारं दृष्ट्वा संस्कार-बुद्धिरेव प्रवर्तेत । न बालपण्डितसत्त्वबुद्धिः । विषये[7] विज्ञानानुवृत्तिं[1] दृष्ट्वा चित्त[2]बुद्धिरेव प्रवर्तेत । नाहं पश्यामीत्येवमादिसत्त्वबुद्धिः । यतश्चैवमबुद्धिपूर्वमेषु [Tib. 68a. 1] पञ्चसु वस्तुषु पञ्चाकारा सत्त्वबुद्धिरेव प्रवर्तते न संस्कार-बुद्धिः । तस्मादबुद्धिपूर्वं तावदस्य दृष्ट्वा सत्त्वबुद्धिप्रत्युपलब्धित एवं भवत्य-स्त्यात्मेति ॥

तस्यैवं [ 2 ] भवति । सचेदात्मा न स्यान्न संस्कारेषु बुद्धिपूर्वा चेष्टोपलभ्येत[3] । अहं चक्षुषा[4] रूपाणि द्रक्ष्यामि पश्यामि दृष्टवान् । न वा द्रक्ष्यामीत्येवमभिसंस्कारपूर्वंगमं कृत्वा । [3] यथा दर्शन एवं श्रोत्रघ्राणजिह्वा-कायमनस्सु वेदितव्यं । एवं कुशलकर्माभिसंस्कारे कुशलकर्मनिर्वृत्तौ[5] अकुशलकर्माभि[4]संस्कारेऽकुशलकर्मनिर्वृत्ता[6]वित्येवमादिका बुद्धिपूर्वा चेष्टा नोपलभ्येत । न चैषा संस्कारमात्रे युज्यते । [तस्माद् ][7] एवं भवत्य-स्त्यात्मेति[8] ॥

स इदं स्या[5]द्वचनीयः । कच्चिदिच्छसि यदेव पश्यति तत्रैव सत्त्वबुद्धि-रुत्पद्यते । आहोस्विदन्यत्पश्यत्यन्यत्र सत्त्वबुद्धिरुत्पद्यते । स चेत्तत्रैव । तेन रूपादिषु सत्त्व इति विपर्यासान्न[6] युज्यतेऽस्त्यात्मेति । स चेदन्यत्र । तेना-कृतिमानात्मेति न युज्यते । पतितोच्छ्रितः । क्षत्रियादिबालपण्डितो रूपा-दिषु[7] विषयग्राहक आत्मेति न युज्यते ॥

कच्चिदिच्छसि स्वभावादेव धर्मस्य[9] तद्वद्धुत्पत्तिराहोस्वित्परस्वभावादपीति[10] ।

1 In Tib. both *anuvrtti* and *'pravrtti'* are hjug pa See Mahā-vyutpatti

2 In Tib the reading is sems for sems can

3 MS °*labhyate*

4 In Tib read gis for gi.

5 Tib dge. bahi. chos, hgrub suggesting *kuśaladharma-nirvrttau.*

6 Tib. °*nirvrttau* (hgrub pa ) as above

7 Tib des. na.

8 For *evam° ti.* Tib des. na de hdi sñam du. sems te/ bdag. yod do. sñam mo/ MS. *nāsty evam bhavaty ātmeti.*

9 For *tad-* Tib expressly *sattva-* (sems can. gyi.).

10 In Tib. *api* is omitted

२६क, Tib. 67b. 5

सचेत्स्वभावादेव। तेन यदेव पश्यति तत्रैव विपर्यस्ता बुद्धि [Tib. 68b 1]-रित्यात्मबुद्धिर्न युज्यते। सचेदन्यस्मादपि[1] तेन सर्वविषयाः [2]सर्वविषयबुद्धेः कारणीभवन्तीति न युज्यते ॥

कच्चिदिच्छसि असत्त्वसंख्याते [3]सत्त्वसंख्यातबुद्धिं। सत्त्वसंख्याते वासत्त्व[2]संख्यातबुद्धिं। तदन्यसंख्याते पुनस्तदन्यसत्त्वसंख्यातबुद्धि-मुत्पद्यमानां वा नो वा। सचेदुत्पद्यते[1] तेनासत्त्वोऽपि सत्त्वः। [3] सत्त्वोऽपि तदन्यसत्त्वो[5] भविष्यतीति न युज्यते। सचेन्नोत्पद्यते। प्रत्यक्षप्रमाण-मपवदितं भवतीति न युज्यते ॥

कच्चि[4]दिच्छसि यासौ सत्त्वबुद्धिः सा प्रत्यक्षार्थ[6]ग्राहिकानुमानार्थग्राहिका वेति। सचेत्प्रत्यक्षार्थग्राहिका। तेन[7] रूपादयः स्कन्धा एव[8] न सत्त्वः प्रत्यक्ष इति न युज्यते। सचेदानुमानिकार्थग्राहिका[5] तेन बाल-दारकाणामप्यनभ्यूह्य सहसा प्रवर्तते इति न युज्यते ॥

[9]स इदं स्याद्वचनीयः। कच्चिदिच्छसि बुद्धिहेतुका वा [6] सत्त्वहेतुका वेति। स चेद्बुद्धिहेतुका। आत्मा चेष्ट[त] इति[10] न युज्यते। स चेदात्महेतुका। बुद्धिपूर्वा चेष्टेति न युज्यते ॥

---

1 Omitted in Tib

2 MS adds here *sattvasamkhyāte* Not in Tib.

3 Tib adds *buddhih* (blo) after *saced*.

4 Here is a difference between MS and Tib and both of them appear to be defective. Here for *sattvo'pi* MS has *tadanyasattvo 'pi*. Tib. would lit read *sattvo 'pi tadanyasattvah sattvo'pi tadanya-sattvah* evidently repeating a few words unnecessarily reading sems. can. yan sems. can. de las gžan pahi. sems. can. yan de. las. gžan. pahi sems can. du hgyur ro.

5 So the MS

6 MS omits *artha* while Tib. reads it (don)

7 Tib. des na, MS *tatra*

8 This is according to Tib., but the MS reads *eva* before *skan-dhāh*.

9 Tib. lit adds *tatra evam api* (de la hdi. skad. kyan)

10 MS *cesta* Tib. lit *ātmanaś cesteti* (bdag. gi spyod pa. žes byar.) See below where it is repeated. But the actual word *ceṣtata* is found just after a few words.

३६ख, Tib. 68a. 7

कच्चिदिच्छसि अनित्यश्चेष्टाहेतुर्नित्यो वेति [7]। सचेदनित्यः। [३७क] सविकार[1] आत्मा चेष्ट[त[2]] इति न युज्यते। स चेन्नित्यो निर्विकारः। तेन निर्विकारश्चेष्टत इति न युज्यते॥

कच्चिदिच्छसि व्यवसायात्मकः सत्त्वश्चेष्टते [Tib 69a. 1] ऽव्यवसायात्मको वेति। स चेद्व्यवसायात्मकः। तदा सदाचेष्टः पुनश्चेष्टत इति न युज्यते॥ स चेदव्यवसायात्मकः। तेनाव्यवसायात्मकश्चेष्टत इति न युज्यते॥

[2] कच्चिदिच्छसि सहेतुकं सत्त्वश्चेष्टते निर्हेतुकं चेष्टते वेति। स चेत्सहेतुकं। सत्त्वस्याप्यन्य[3]श्चेष्टायां प्रेरक इति न युज्यते। सचेन्निर्हेतुकं। सदा सर्वकालं सर्वं [3] चेष्टत इति[4] न युज्यते[5]।

कच्चिदिच्छसि सत्त्वः स्वतन्त्रश्चेष्टते परतन्त्रो वेति। स चेत्स्वतन्त्रः। आत्मनो व्याधिं जरां मरणं दुःखं संक्लेशं [प्रति ?] चेष्टत इति न [4] युज्यते॥ सचेत्परतन्त्रः। आत्मा चेष्टत इति न युज्यते॥

स इदं [6]स्याद्वचनीयः। कच्चित्स्कन्धमात्रे सत्त्वप्रज्ञप्तिमिच्छसि स्कन्धेषु वान्यत्र वा स्कन्धेभ्यः। [5] सचेत्स्कन्धमात्रे। तेन निर्विशिष्टः स्कन्धेभ्यः सत्यतः स्थितितोऽस्त्यात्मेति न युज्यते। सचेत्स्कन्धेषु। स नित्यो वा स्यादनित्यो वा। [6] सचेन्नित्यः। नित्यस्य सुखदुःखाभ्यामनुग्रहोपघातो[7] न युज्यते। अनुग्रहोपघाते वा पुनः सति धर्माधर्मयोः प्रवृत्तिर्न युज्यते। धर्माधर्मयोः प्रवृत्तावसत्या[8]मत्यन्तं[9] देहानुत्पत्तिः। अप्रयत्ने च सदा[10] मुक्त आत्मेति न युज्यते॥ सचेदनित्यः। पृथक्संस्कारेभ्यो भङ्गोत्पत्तिप्रबन्धप्रवृत्तितो नोपलभ्यते [Tib. 69b 1] इति न युज्यते॥ इह च विनष्टस्यान्यत्राकृताभ्या-

---

1 Tib. lit. *vikārād* (hgyur. ba. yod. pas).
2 See note 8 above.
3 MS *anyaceṣṭāyām* for anyaś ce° (Tib. gžan. žig).
4 MS *ceṣṭati* for *ce°ti*
5 Tib. omits *na yujyate*.
6 Tib. lit *evam* (hdi. skad) So in the above cases.
7 So the MS
8 Tib hjug. pa. med. na ni, MS *pravṛttyeva satyām*
9 Tib gtan. for gtan. du
10 MS *ya*; Tib. hbad. mi dgos par.

३६ख, Tib. 68b. 6

गमदोष इति न युज्यते। सचेदन्यत्र स्कन्धेभ्यः। तेनासंस्कृतः सत्त्व इति न युज्यते। सचेदस्कन्धकः[1] तेन [2] सदासं[2]क्लिष्टोऽसम्बन्धादात्मेति[3] न युज्यते ॥

कच्चिदिच्छसि द्रष्ट्रादिलक्षणो वा तदन्यलक्षणो वा। सचेद्द्रष्ट्रा[3]दिलक्षणः। तेन किं दर्शनादिषु द्रष्टृत्वाद्युपचारं कृत्वा द्रष्टृत्वलक्षण आहोस्वित्पृथक्तेभ्यः। सचेद्दर्शनादिषु [उपचारे] [4]तेन दर्शनादी[4]न्येव[5] द्रष्टृणीत्यात्मा द्रष्टेति न युज्यते। निर्विशिष्ट [आत्मा][6] दर्शनादिभिः[7]। स चेदन्यस्तेभ्यः। तेन तद्दर्शनादिकमात्मनः[8] कर्म वा स्यात्करणं वा। सचेत्कर्म। तच्च [5] बीजवत्[9]। तेनानित्यत्वान्न युज्यते। सचेत्कुम्भकारादिसंव्यवहारपुरुषवत्। [6] तेनानित्यश्च सांवृतश्चेति न युज्यते। स कामकारी च सवार्थेष्विति[10] न युज्यते। सचेत्पृथिवीवत्। [३७ख] तेनानित्यश्च। न च पृथिवीवत्स्पष्टकर्मेति न युज्यते। [7] तथाहि पृथिव्याः कर्म स्पष्टमुपलभ्यते। यदधस्तात्तद्वशान्न पतति। सचेदाकाशवत्। तेन रूपाभावमात्र आकाशप्रज्ञप्तिरिति न युज्यते। सत्यपि च प्रज्ञप्तिसत्त्वे [Tib 70a. 1] स्पष्टं तत्कर्मोपलभ्यते। न त्वात्मन इति न युज्यते। तथा ह्याकाशस्य स्पष्टं कर्मोपलभ्यते यत्तद्वशादागमनगमनसङ्कोचनप्रसारणादिकर्म [2] प्रवर्तते। तस्मात् कर्मेति न युज्यते। सचेत्करणं दात्रादिवत्। तेन यथा दात्रादन्या छेदनादिक्रिया एवं दर्शनादन्यद्[3]दर्शनाद्यन्तरं नोपलभ्यत इति न युज्यते। सचेदग्निवत्। तेन व्यर्थाग्निकल्पनेति

---

1 The Xylograph is here illegible
2 Tib. rtag., MS *tadā.*
3 Tib hbrel ba. med. pahi phyir , MS *asambaddhadeha°*
4 Tib. gdags. na but it seems to read as btags na
5 Tib. lta. ba la sogs. rnams ñid lta ba. por gyur. gyi / MS *darśanād ity eva.*
6 Tib bdag ni.
7 Tib. adds here *iti drastā na. yujyate* (bye. brag. med. pas lta. ba. por. mi. run. no )
8 In Xylograph the reading is gi for gis after bdag.
9 Tib. sa. bon. dan. hdra. bas, MS *jīvat.*
10 Both the Skt. and Tib. texts are not clear here.

३७ क, Tib. 69b. 1

न युज्यते। तथा ह्यग्निरन्तरेणापि दाहकं स्वयमेव दहति। सचेद् [4] द्रष्ट्रादिलक्षणात्तदन्यः। तेन सर्वप्रमाणहीन आत्मेति न युज्यते॥

स इदं स्याद्वचनीयः। कच्चिदिच्छसि यत्संक्लेशव्यवदानलक्षणयुक्तं [5] तत्संक्लिश्यते वा व्यवदायते वा। यद्वा तदलक्षणयुक्तं। सचेत्संक्लेशव्यवदानलक्षणयुक्तं तत्संक्लिश्यते वा [6] व्यवदायते वा। तेन येषु संस्कारेष्वीतय उपद्रवा उपसर्गास्तद्व्युपशमानुग्रहा वोपलभ्यन्ते ते संस्काराः संक्लेश[7]व्यवदानलक्षणयुक्ताः। अतोऽसत्यात्मनि ते संक्लिश्यन्ते व्यवदायन्ते चेति न युज्यते। तद्यथा बाह्यभावा आध्यात्मिकाश्च देहाः। सचेत् [Tib 70b. 1] तदलक्षणयुक्तं। तेन संक्लेशव्यवदानलक्षणविरहितः संक्लिश्यते व्यवदायते [1]वात्मेति न युज्यते॥

स इदं स्याद्वचनीयः। कच्चिदिच्छसि यत्प्र[2]वर्तकलक्षणयुक्तं तत्प्रवर्तते च निवर्तते च। तदलक्षणयुक्तं वा[2]। सचेद्यल्लक्षणयुक्तं[3]। तेन संस्कारेषु पञ्चाकारं प्रवर्तक[4][3]लक्षणमुपलभ्यते। तथा हि। यद्धेतुमदुत्पादशीलं व्ययशीलमन्योन्यपरम्पराप्रवृत्तं विकारि च तत्प्रवर्तकलक्षणं। तच्च संस्कारेषूपलभ्यते। तद्यथा[4] देहाङ्कुरनदीदीपयानस्रोतस्सु। तेनान्तरेणात्मानं संस्कारा एव प्रवर्तन्ते निवर्तन्ते चेति न युज्यते। सचेत्तदलक्षणयुक्तं। तेन प्रवर्तक[5]लक्षणहीन आत्मा प्रवर्तते [निवर्तते][5] चेति न युज्यते॥

स इदं स्याद्वचनीयः। कच्चिदिच्छसि यो विषयनिर्जाताभ्यां[6] सुखदुःखाभ्यां विकारमापद्यते। यश्च चेतनया विकारमापद्यते। [6] यश्च क्लेशोपक्लेशैर्विकारमापद्यते। स भोक्ता वा कर्ता वा मोक्ता वेति।[7] यो वा न विकारमापद्यते।

---

1 Tib. lit *ca* (dan) for *vā*.

2 Tib ham, MS *ca* for *vā*

3 Tib gal te gan. mtshan. ñid. dan. ldan. pa, MS *sace yathālakṣana°*

4 In the Xylograph read hjug pa. for hdug pa.

5 Tib. ldog. par. hgyur.

6 Tib. has literally *viṣayajanitābhyām* (yul. gyis. bskyed pahi).

7 Here *vā* is supported by Tib. (ham), for which MS reads *ca* and it is not in Tib.

३७ ख, Tib. 70a. 3

सचेद्विकारमापद्यते। तेन संस्कारा 17] एव भोक्तारः कर्तारो मोक्तार इत्यनित्य आत्मा [इति][1] न युज्यते। सचेन्न[2] विकारमापद्यते। तेन भोक्ता कर्ता मोक्तात्मेति निर्विकारो [Tib 71a. 1] न युज्यते॥

स इदं स्याद्वचनीयः। कच्चिदिच्छस्यात्मन्येव[3] कर्तुपचार आहोस्विदन्यत्राप्यात्मनः। सचेदात्मन्येव। अग्निर्दहति। [4]आभालोकं [2] करोतीति न युज्यते॥ सचेदन्यत्रापि। तेन दर्शनादिष्विन्द्रियेषु कर्तुपचार इति व्यर्थात्मकल्पनेति न युज्यते॥

स इदं स्याद्वचनीयः। [3] कच्चिदिच्छस्यात्मन्येवात्मोप[३८क]चार आहोस्विदन्यत्रापीति। स चेदात्मन्येव। तेन संव्यवहारः पुरुषदेहे[5] गुणमित्रो बुद्धदत्त इत्येवमादि[ः] [4] न युज्यते। स चेदन्यत्रा[पि][6]। तेन संस्कारमात्र आत्मोपचार इति व्यर्थात्मकल्पनेति न युज्यते। तथाहि संव्यवहारः पुरुष एवात्र[7] सत्त्व इति संज्ञायते। स्वयं[8] परेषामपि व्यपदिश्यते॥

[5] स इदं स्याद्वचनीयः। कच्चिदिच्छसि येयमात्मदृष्टिरियं कुशला वाकुशला वेति। सचेत्कुशला। तेन मूढतराणां[9] [6] भृशतरोत्पद्यते। अन्तरेणापि प्रयोगमुत्पद्यते। मोक्षोत्त्रासकरी[10] दोषपोषिका चेति न युज्यते॥ सचेदकुशला। तेन [तथा][11] सति[12] अविपर्यस्तेति न युज्यते। सति च तद्विपर्यासे [7] अस्यात्मेति न युज्यते॥

कच्चिदिच्छसि नैरात्म्यदृष्टिः कुशला वाकुशला वेति। सचेत्कुशला। तेन सत्यतः स्थितितः सत्यात्मनि नैरात्म्यदृष्टिः कुशलाविपरीतेति न युज्यते॥

---

1 Tib ḥgyur bas bdag. mi rtag pai hgyur byahi phyir. mi run. no

2 MS adds here *yo* not in Tib. *Cf.* above *saced vikāram āpadyate*.

3 MS adds before it *kartum*

4 In the Xylograph the reading is hod for yid

5 Tib. mi. lus. na , MS *puruse deha*.

6 MS omits *api*

7 Here *atra* is not supported by Tib. which suggests *api* (yan).

8 Not in Tib

9 Tib simply *mūdhānām*

10 MS *°kārī*

11 Tib. de. lta.

12 After *sati* MS adds *samyag* not in Tib

३७ ख, Tib. 70b. 6

[Tib 71b 1] संचेदकुशला। तेन सर्वज्ञदेशिता प्रयोगजनिता मोक्षानुत्त्रासकरी[1] शुक्र[2]फला[3] दोषाणां प्रतिपक्षभूतेति [2] न युज्यते ॥

कच्चिदिच्छसि आत्मैवास्त्यात्मेति मन्यते आत्मदृष्टिर्वा ॥ सचेदात्मैव। तेन न कदाचिन्नास्त्यात्मेति बुद्धिः स्यादिति न युज्यते ॥ सचेदात्म[3]दृष्टिः। तेनासत्यप्यात्मनि संस्कारमात्र आत्मदर्शनवशादस्त्यात्मेति मन्यत इति न युज्यते। [तस्मादस्त्यात्मेति न युज्यते ॥]

[4] एवं लक्षणव्यवस्थया संक्लेशव्यवदानव्यवस्थया प्रवृत्तिनिवृत्तिव्यवस्थया भोक्तृकर्तृ[5]मोक्तृद्रष्टृप्रज्ञप्तयापि आत्मास्तीति न युज्यते ॥][4]

अपितु पारमार्थिकमात्म[5]लक्षणं वक्ष्यामि। धर्मेष्वात्मप्रज्ञप्तिः।[6] [6] स तेभ्योऽन्यानन्यत्वेनावक्तव्यः। मा भूदस्य द्रव्यसत्त्वमिति।[7] तेषां वा धर्माणामात्मलक्षणत्वं। स पुन[8]रनित्यलक्षणः। अध्रुवलक्षणः। अनाश्वा-

---

1 MS *mokṣo'nuttrās°*  2 MS adds *satya* (?).

3 Here the Xylograph is illegible. One may read here hbras. bu (*phala*). After this Tib. reads hbrel. du thob par. byed. suggesting *sambandhaprāptikarī*

4 Tib. adds dehi phyir bdag. yod. de. źes. byar. mi run no. After it the following is only in Tib the first few words of it are not clear Then it runs de ltar. na blo. snon du ma btan ba dehi. blo hjug pa dan / blo [4] snon. du. btan . .dan/ phun po rnams la. hdogs. pa dan. / mtshan ñid rnam par bźag. pa. dan / kun nas ñon. mons. pa. dan. rnam. par. byan. ba. rnam. par bžag. pa. dan/ hjug. pa. dan. /ldog. pa rnam par. bźag. pa. dan /za ba. po dan/ byed. pa [5] po. dan / grol ba po rnam. par. bźag pa dan/byed. pa. po hdogs brjod pa. hd° gs. pa. dan/ lta ba. hdogs pas kyan. bdag. yod par. mir. un no.

5 Tib. yan. dag. pahi Here yan may be taken for *api* or *tu* In that case dag. pahi would mean *śuddham* yan. dag, together may mean *paramārtha* for which we have generally don. dam

6 Tib. chos. rnams la bdag. hdogs, MS *dharmesu. prajñaptis tadātmā.*

7 Tib. rdzas su. hgyur. du. hon. bahi phyir ?

8 These two words are not in Tib

सिकलक्षणः।[1] विपरिणामलक्षणः जातिधर्मलक्षणः। जराव्याधिमरणधर्मलक्षणः। धर्ममात्रलक्षणः। दुःखमात्र[2]लक्षणः। तथाह्युक्तं भगवता। [Tib. 72a. 1] इतोमे भिक्षो धर्मा आत्मा (?)।[3] अनित्यस्ते भिक्षो आत्मा अध्रुवो[4]ऽनाश्वासिकः। विपरिणामधर्मको भिक्षो आत्मेत्येवमादि॥ [2]

अपि चतुर्भिः[5] कारणैः संस्कारेषु सत्त्वप्रज्ञप्तिर्वेदितव्या[6] सुखसंव्यवहारार्थं। लोकानुवृत्त्यर्थं। सर्वथा सत्त्ववस्तु [3] नास्तीत्युत्त्रासप्रहाणार्थं। आत्मनि परत्र च व्यपदेशतो गुणसत्त्वदोषसत्त्वसंप्रत्ययोत्पादनार्थं च। तस्मादात्मवादोऽप्ययोग[7]विहतः॥

[शाश्वतवादः]

[३८ख] शाश्वतवादः [4] कतमः। यथापीहैकत्यः श्रमणो वा ब्राह्मणो वेति पूर्ववत्। शाश्वत आत्मा लोकश्च। अकृतः अकृतकृतः।[8] अनिर्मितः। अनिर्माणकृतः [5] अवध्यः। कूटस्थायी इषिकास्थायी स्थितः[9]। तद्यथा।

---

1 Tib. yid. brtan. du. mi. run. bahi. mtshan ñid dan./

2 Here *mātra* is ommited in Tib.

3 Tib. dge slon. dag. khyod. kyi. (*not* kyis as read) chos. (here one letter is obscure) bdag. ni. lhdi. yin. te for *ime dharmāḥ* in Skt. Tib. has the singular number.

4 Tib. *adhruvas te bhikṣo ātmā* (dge. slon. dag. khyod. kyi.bdag. ni. mi. brtan. pa. dan.).

5 Tib. *caturvidhaiḥ* (rnam. pa. bźis.).

6 Before this word Tib. wrongly puts *na* (ma).

7 Tib. *yukti* (rigs.).

8 The interpretation in Tib. is this.*na kṛtena kṛtaḥ* (byas. pas. byas. pa. ma. yin. pa.).

9 The word *iṣikā* which is written variously (as *iṣīka*, *iṣīkā* *īṣikā*) means an arrow or a 'small stick of iron or wood' among other things. In Mahāvyutpatti (7048) *iṣikā* is given in Tib. as sin. rtags. but it does not help much, the first word being for a tree or wood, and the second for 'sign', *nimitta, cihna, linga*, etc.) In Mahāvastu there is *iṣikāni māpitāni*. Here *iṣika* (n) for *iṣikā* is used to mean an arrow (?) In our own text in Tib. *iṣikāsthāyin* is translated as srog. shin. ltar. brtan. par. gnas. pa. and literally means *prāṇataruvat sthirasthāyin* Now srog. shin. in Tib. also means *akṣa-* or *yaṣṭi-vṛksa*, meaning 'axle' and 'pole tree' respectively. It may be taken here in the last sense. In Pali *esika* or *esikā* means a 'pillar'; *esikaṭṭhāyin* means 'as stable as a pillar.'

शाश्वतवादिनः एकत्यशाश्वतिकाश्च[1] पूर्वान्तकल्पका अपरान्त[6]कल्पका वा संज्ञिवादिनोऽसंज्ञिवादिनो नैवसंज्ञिनासंज्ञिवादिनश्च। एके वा पुनः-शाश्वतिकाः[2]। केन कारणेनैवं[7]दृष्टिर्भवत्येवंवादी। शाश्वत आत्मा लोकश्च।[3] तत्कारणं यथासूत्रमेव यथायोगमेव[1] वेदितव्यं ॥

तत्र पूर्वान्तकल्पकानां मृदुमध्याधिमात्र[Tib. 72b. 1]ध्यानसंनिश्रयेण अतीताध्विकं पूर्वान्तं कल्पयतां पूर्वनिवासानुस्मृत्या प्रतीत्यसमुत्पाद-कुशलानां[5] अतीतसंस्कारेषु स्मृतिमात्रं यथाभूतं संप्रजानतां [2] तद्दृष्टिगत-मुत्पद्यते। दिव्यचक्षुस्संनिश्रयं वा पुनर्वर्तमानाध्विकं पूर्वान्तं कल्पयतां क्षण-भङ्गानुप्रवृत्तिं संस्काराणां यथाभूतमप्रजानतां विज्ञानस्रोतःप्रबन्धं चास्माल्लोकात्परं लोक[3]मुपलभमानानां तद्दृष्टिगतमुत्पद्यते। ब्रह्मणो वा पुनः स्वमनोरथ-सिद्धिमुपलभतः[6] महाभूतविपरिणामं विज्ञानविपरिणामं चोपलभमानस्य ॥ [4] अपरान्ते वा पुनः संज्ञां वेदनाभेदं [च][7] पश्यतो[8] न [9]स्वलक्षणभेदं तद्दृष्टिगत-मुत्पद्यते। येनास्यैवं भवति शाश्वत आत्मा लोकश्च ॥

अणुनित्यत्वग्राहिणो[10] वा पुन 5]र्लौकिकध्यानसंनिश्रयेणैवं पश्यन्ति। यथाभूतं प्रतीत्यसमुत्पादमप्रजानतो भावपूर्वकं भावानां फलप्रचयोदयं। अपचय-पूर्वकं च विनाशं [6] कल्पयतो येनैवं भवति। अणुभ्यः स्थूलं द्रव्यमुत्पद्यते। स्थूलं च द्रव्यं विभज्यमानमण्ववस्थमवतिष्ठतीति[11]। अतः स्थूलं द्रव्यमनित्यं। नित्याः परमाणव [इति][12]।

1 Cf. Pali *ekaccasassatikā* (Dīgha Nikāya, 17)

2 For *aśā°* Tib reads rdul phra. mo rtag. par. hdzin to. Here *mo* appears to be read mi or ma, but rdul. phra (=rdul phra. rab, =*paramāṇu*) does not give here any appropriate sense

3 See Dīgha Nikāya, I 13ff.

4 Tib rigs par.

5 Tib. *pratītyasamutpāde kuśalānām* (rten. cin. hbrel bar. hbyun. ba la mi. mkhas. pa). Ms. *-pādāt*

6 MS adds *vā* before *upalabhataḥ*, not in Tib. Tib. dmigs. pa. See the following words in which we have *upalabhamānasya*.

7 Tib. dan.

8 Tib mthon la, MS *paśyanto*.

9 Tib. omits *sva*. MS *svalakṣaṇam bhedam*

10 Tib. rdul. phra. mi. rtag. par. hdsin. pa ni. Here for *nityatva* there is *anityatva*. MS *aśāśvatikāḥ*

11 So the MS here

12 Tib. sñam. mo.

३८ख, Tib. 72a. 5

[7] तत्र पूर्वान्तकल्पकानामपरान्तकल्पकानां च विशेषलक्षणसंगृहीतत्वाच्छाश्वतवादस्यात्मवादे विदूषित आत्मनो विशेषलक्षणवादोऽपि विदूषितो भवति ॥

[Tib 73a, 1] अपि च स इदं स्याद्वचनीयः । कच्चिदिच्छसि पूर्वनिवासानुस्मृतिः स्कन्धग्राहिका वात्मग्राहिका वेति । सचेत्स्कन्धग्राहिका । शाश्वत आत्मा लोकश्चेति [2] न युज्यते । सचेदात्मग्राहिका । तेनामुका नाम तेऽभवन्[1] सत्त्वा यत्राहमभूवमेवंनामैवंजात्य[2] इति विस्तरेण [कथनं न][3] युज्यते ॥

कच्चिदिच्छसि रूपावलम्बने [3] चक्षुर्विज्ञाने संमुखीभूते रूप एव विषये समवहिते तदन्येषु विषयेषु व्यवहितेषु तदन्येषां विज्ञानानां निरोधो वा प्रवृत्तिर्वेति । सचेन् [4] निरोधः । विरुद्धं विज्ञानं निमित्त[4]मिति न युज्यते । सचेत्प्रवृत्तिः । तेनैकेन विषयेण सर्वकालं सर्वविज्ञानप्रवृत्तिरिति न युज्यते ॥

कच्चिदिच्छसि [5] अस्त्यात्मनः संज्ञाकृतो वा वेदनाकृतो वा विकारो न वेति । [३९क] तेन शाश्वत आत्मा च लोकश्चेति न युज्यते । सचेन्नास्ति । तेनैकत्व[6]संज्ञी भूत्वा नानात्वसंज्ञी परीत्तसंज्ञी अप्रमाणसंज्ञी भवतीति न युज्यते ॥ एकान्तसुखी एकान्तदुःखी सुखदुःखी [7] अदुःखासुखी भवतीति न युज्यते ॥

[तज्जीवतच्छरीरवादः]

तत्र यः कश्चित्सजीवस्तच्छरीरमिति पश्यति स रूपिणमात्मानं पश्यति । योऽन्यो जीवोऽन्यच्छरीरं [इति][5] । सोऽरूपिणं । [Tib. 73b 1] य उभयं कृत्स्न[6]मद्वयमविकलमात्मानं । स रूपिणं चारूपिणं[7] च तद्विपक्षे चैतमेवार्थमन्येन पदव्यञ्जनेना [2] भिनिविशन्नेव रूपिणमात्मानं नारूपिणं पश्यति ॥

---

1 MS *bhavantah* 2 MS *jātyeti*

3 Tib. brjod. par. mi.

4 In the Xylograph read rtags. so *for* rtag. go., the former meaning *nimittam*

5 Tib. žes. It adds here *paśyati* (lta ba) and so in the following sentence. For this theory see Sūtrakṛtāṅgasūtra

6 Tib. zad. pa. illegible

7 Tib. *na. rūpinam ca nārūpinam ca* (?) reading gzugs. can. yan ma. yin. la/gzugs can. ma yin. pa. gan. ma. yin. pa. dan//.

३८ख, Tib. 72b. 7

सचेत्पुनः रूपिणं वारूपिणं वा परीत्तं पश्यति सोऽन्तवन्तं पश्यति ॥ स चेद्-प्रमाणं [3] पश्यति सोऽनन्तवन्तं पश्यति। सचेत्कृत्स्नं पश्यति। रूपांशेन परीत्तमरूपांशेनाप्रमाणमरूपांशेन वा परीत्तं रूपांशेनाप्रमाणं। सोऽन्तवन्तं चा-[4]नन्तवन्तं[1] च पश्यति। तद्विपक्षेण[2] वा व्यञ्जननानात्वं[3] नो त्वर्थनानात्व-मभि[4]निविशन्नान्तवन्तं नानन्तवन्तं[5] पश्यति मुक्तो वा [5] पुनरद्वयं पश्यति ॥

[अणुनित्यत्ववादः]

अणुनित्य[त्व]वादी पुनरिदं स्याद्वचनीयः। कच्चिदिच्छसि अपरीक्षितं वा परमाणुनित्यत्वं परीक्षितं वा। सचेदपरीक्षितं। तेन परीक्षामन्तरेण नित्यत्व-निश्चय [6] इति न युज्यते ॥ सचेत्परीक्षितं। तेन सर्वप्रमाणविरुद्धमिति न युज्यते ॥

कच्चिदिच्छसि सूक्ष्मत्वात्परमाणुनित्यत्वमाहोस्वित्स्थूलफलद्रव्यभिन्नलक्षण-त्वात्[6] [7]। सचेत्सूक्ष्मत्वात्। तेन यदपचितं[7] [तद्][8] दुर्बलतर[मिति][9] नित्य-मिति न युज्यते ॥ सचेद्भिन्नलक्षणत्वात्। तेन पृथिव्यप्तेजोवायुलक्षणमति-क्रम्यातुल्यजातीय[ Tib. 74a. 1 ]लक्षणा तत्कार्योत्पत्तिरपि न युज्यते। लक्षणान्तरमपि नोपपद्यत इति न युज्यते ॥

कच्चिदिच्छसि परमाणुभ्यः स्थूलं द्रव्यमभिन्नलक्षणं वा भिन्नलक्षणं वा।[10] [2]सचेदभिन्नलक्षणं। निर्विशिष्टं हेतुना तथैव नित्यं।[11] न चास्ति हेतुनियमो न

1 Tib. mthah. med. kyan. med. par. ltaho. Here according to the Skt. text for the second med one should read yod.

2 Tib. supports *vipakṣe* (gñen. por) as before

3 MS °*nānātve*.

4 *anabhiniviśan* (manon žen. pa. ma. yin)

5 Tib. mthah. yod. pa. yan. ma. yin./mthah. med. pa. yan. ma. yin. par. lta. ho. MS °viśann evāntavantavantam (evidently wrong) nānantavantam

6 Tib which reads hon te hbras. buhi. rdsas rags. pa. dan/ tha. dad. pahi. mtshan. ñid. yin. pahi. phyir. MS *sthūlāt phala* for *sthūla phala*.

7 Tib. *sūkṣmam* (phra. ba).

8 Tib. de ni.

9 Tib phyir.

10 Tib first *bhinna la*° then *abhinna la*°.

11 MS *nirviśisto* and *nityah*.

३९क, Tib. 73b. 3

फलनियम इति न युज्यते ॥ सचेदभिन्नलक्षणं। तेन कच्चिदिच्छसि विभक्तेभ्यः [3] परमाणुभ्यो निष्पद्यते संयुक्तेभ्यो वा। सचेद्विभक्तेभ्यः। तेन सदा सर्वकार्योत्पत्तिर्न च हेतुनियमो न च फलनियम [4] इति न युज्यते ॥ सचेत्संयुक्तेभ्यः[1]। तेन कच्चिदिच्छसि तस्मादनतिरिच्यमानविग्रहमूर्त्ति वा[2] अतिरिच्यमानविग्रहमूर्त्ति वेति।[3] सचेदनतिरिच्यमानविग्रहमूर्त्ति।[4] [5] तन्मूर्त्तिद्रव्यानिष्पन्नं न मूर्त्यैव (?)।[5] सचेदनतिरिच्यमानविग्रहमूर्त्ति। तेन परमाणुनिरवयवत्वाद्विभागेऽसति स्थूलमपि द्रव्यं नित्य[6]मिति न युज्यते। [३९ख] अपूर्वपरमाणुप्रादुर्भावे पुनः परमाणुर्नित्य इति न युज्यते ॥

कच्चिदिच्छसि बीजादिवत्परमाणूनां स्थूलद्रव्यारम्भकत्वं कुम्भकारादिवद्वेति। [7] स चेद्बीजादिवत्। तेन बीजवदनित्य इति न युज्यते। सचेत्कुम्भकारादिवत्। तेन चेतनः परमाणुरिति न युज्यते। सचेन्न [Tib 74b. 1] बीजादिवन्न कुम्भकारादिवत्। तेन[6] दृष्टान्तो नोपलभ्यत इति न युज्यते ॥

कच्चिदिच्छसि सत्त्व[7]नैमित्तिकी बाह्यानां भावानामुत्पत्तिर्नवेति[8]। [2] सचेत्सत्त्वनैमित्तिकी। तेन स्थूलं द्रव्यं सत्त्वनैमित्तिकं। सूक्ष्मं द्रव्यं तदाश्रयं न सत्त्वनैमित्तिकमिति न युज्यते। केन तच्छक्तिर्वार्यते। सचेन्न सत्त्वनैमित्तिकी[9] [3] तेन निष्प्रयोजनो बाह्यानां भावानां प्रादुर्भावो न युज्यते ॥

---

1 Tib. adds *icchasi* (hdod. na ) *samyuktebhyah.*

2 So Tib. too (de. las)

3 MS *mūrtir vā.*

4 Here, too, Tib. adds *icchasi* (hdod) See note No. 1.

5 *tat° mūrtyeva* is the reading in the MS, but it is doubtful The Tib text is also not clear It runs as follows. rdzas. kyi. lus. las. grub pa ste / lus de. ñid du. hgyur. bas. ma. run no

6 Here MS adds *sa* which is not appropriate nor is supported by Tib.

7 Here it is in the sense of *jīva* as in Tib (sems. can).

8 MS *bhavati* for *veti* which is supported by Tib

9 MS *°naimittikam,* but see before where it is to be construed with *utpatti.*

३९ क, Tib. 74a. 2

इति स्कन्धसत्त्वानुसरणतोऽपि । एकेन विपर्येण सर्वविज्ञानस्रोतःप्रवृत्तितोऽपि । संज्ञा[4]वेदनाभिर्विकारनिर्विकारतोऽपि पूर्वान्तकल्पकानामपरान्तकल्पकानां च शाश्वतवादो न युज्यते ॥

परीक्षापरीक्षणतो[1]ऽपि सामान्यलक्षणतोऽपि मूल[2]लक्षणतोऽपि आरम्भतोऽपि मूल[3][5]प्रयोजनतोऽपि परमाणुनित्य[4][त्व]वादोऽपि न युज्यते। तस्मादेषोऽपि वादोऽयोगविहितः ॥

अपितु नित्यलक्षणं वक्ष्यामि। यत्सर्वदा निर्विकारलक्षणं। सर्वथा निर्विकारलक्षणं। [6] स्वयं निर्विकारलक्षणं। परतो निर्विकारलक्षणमजन्मवच्च। इदं शाश्वतलक्षणं वेदितव्यं[5] ॥

[ पूर्वकृतहेतुवादः ]

पूर्वकृत[7]हेतुवादः कतमः। यथापीहैकत्यः श्रमणो वा ब्राह्मणो वेति विस्तरेण यथासूत्रं।[6] यत्किञ्चिदयं पुरुषपुद्गलः प्रतिसंवेदयत इति दुःख[7]मित्यभि। प्रायः। पूर्व[Tib 75a. 1]कृतहेतुकमिति पापकहेतुकमित्यभिप्रायः[8]। पौराणानां कर्मणां तपसा व्यन्तीभावादिति दृष्टधर्मिकेण [9]कष्टेनेत्यभिप्रायः। [2]नवानां च कर्मणामकरणसमुद्घाता[10]दित्यकुशलानामित्यभिप्रायः। एवमायत्यामनास्रव

1 Here the sandhi is *parīkṣā-aparīkṣaṇataḥ* (Tib. brtags. pa. dan. ma. brtags pa. dan).

2 For *mūla* we have in Tib. rtsa ba, but here the actual reading is ren, but what does it mean here ?

3 In the Xylograph read gźi for bzi.

4 MS *anityavādo'pi*, Tib has rdul rtag par smra literally suggesting *rajonityavādaḥ*, but evidently rdul. rtag pa. is to be taken here for rdul phra. rab. (*paramāṇu*), or, rdul. phra mo (*aṇu*).

5 Tib marks here the end of the seventh section (bam po bdun. pa).

6 This view is held by the Jains See below p. 143, l 4 where a Nirgrantha is clearly mentioned.

7 Tib sdug bsnal las. Read here la for las.

8 After it Tib adds *tathā hi* (de ltar )

9 For *kaṣṭa* Tib lit *utkatopabhoga* (drag. po spyod pa).

10 For *samudghāta* Tib lit. *vipratiṣedha* (dgag go ) In the Xylograph just before it there is something more which is illegible Here are four letters, the first and the last being chu and gyi respectively.

२९ख, Tib. 74b. 3

इति ॥ एकान्तकुशलता आयत्यामनास्रव इत्युच्यते । [3] अनास्रवात्कर्मक्षय इति पापस्येत्यभिप्रायः । कर्मक्षयाद्दुःखक्षय इति पूर्वकृतहेतुकस्य च दृष्टधर्मौपक्रमिकस्य[1] चेत्यभिप्रायः । दुःख[4]क्षयाद्दुःखस्यान्तक्रिया भवतीति अन्यजन्मप्राबन्धिकस्येत्यभिप्रायः । तद्यथा निर्ग्रन्थाः ॥

केन कारणेनैवंदृष्टिर्भवत्येवंवादी । आगमतो युक्तितश्च ॥

[5] आगमः पूर्ववत् । युक्तिः कतमा । यथापीहैकत्यस्तार्किको भवतीति पूर्ववत् । दृष्टे धर्मे पुरुषकारस्य व्यभिचारदर्शनतः । तथा हि । स पश्यति लोके [6] सम्यक्प्रयोगवतामपि दुःखमुत्पद्यमानं । मिथ्याप्रयोगवतामपि सुखमुत्पद्यमानं । तस्यैवं भवति सचेत्पुरुषकारहेतुकं स्यात् । तदेतद्विपर्ययात्स्यात् । यस्मात्तन्मे तद्विपर्ययाद्भवति [7] तस्मात्पूर्वहेतुकमेतदिति येनैवं दृष्टिर्भवत्येवंवादी ॥

स इदं स्याद्वचनीयः । कच्चिदिच्छसि यत्तद्दृष्टधर्मौपक्रमिकं[2] [Tib. 75b 1] दुःखं तत्पूर्वकृतहेतुकं वा दृष्टधर्मोपक्रम[४०क]हेतुकं वेति । सचेत्पूर्वकृतहेतुकं । तेन पौराणानां कर्मणां तपसा व्यन्तीभावात्प्रत्युत्पन्नानां [2] वा करणसमुद्घातादेवमायत्यामनवस्रव इति विस्तरेण न युज्यते । सचेद्दृष्टधर्मोपक्रमहेतुकं । यत्किञ्चिदयं पुरुषपुद्गलः प्रतिसंवेदयते सर्वं [3] तत्पूर्वकृतहेतुकमिति न युज्यते इत्यौपक्रमिकस्य दुःखस्य पूर्वकृतहेतुकता[3]पि पुरुषकारहेतुकतापि न युज्यते । तस्मादेषोऽपि[4] वादोऽयोगविहितः ॥

[4] अपि त्वस्त्येकान्तेन पूर्वकृतहेतुकं दुःखं । यथापीहैकत्यः स्वकर्माधिपत्येनापायेषु वोत्पद्यते नीचेषु वा कृच्छ्रेषु वा कुलेषु । अस्ति [5] व्यामिश्रहेतुकं दुःखं । तद्यथा । राजानं मिथ्या[5] सेवतो यन्निष्फलहेतुकं दुःखं । यथा

---

1 Tib. tshe hdihi (*dṛṣṭe dharme*, lit *asmin kāle*) gnod pa las. byun. ba las. bsams. paho. 2 MS °*dharmopa*°

3 Here and in the following word MS °*hetukato*° for *hetukatā*° Tib. text after rgu las. byun. ba. the sense of ñid (-*tā*) is to be understood

4 Tib. yan, it is omitted in the MS.

5 Here according to Tib. the sense of *mithyā* is 'deceit' (gyos. instrumental of gyo). Here in this and in the following sentence read bsten for brten in the Xylograph.

३९ख, Tib. 75a. 2

राजानं सेवत एवं व्यवहार[1]कर्मान्तान् कुर्वतः कृषि[6]कर्मान्तान् स्तेयकर्मान्तान्। परापकारेषु वा प्रवर्तमानस्य। सुपुण्यस्य समृध्यत्यपुण्यस्य विफलीभवति पुरुषकारः। एकान्तेन पुरुषकारहेतुकं।[2] तद्यथा नवमन्यभवा[3]क्षेपकं कर्म। सद्धर्मं शृण्वतो धर्मानभिमुखमभिसम्बुध्यतः ईर्यापथं कल्पयतः शिल्पकर्मस्थानानि शिक्षतः। इत्येवं [Tib. 76a 1]भागीयाः पुरुषकारहेतुकाः॥

[ईश्वरादिकर्तृवादः]

ईश्वरादिकर्तृवादः कतमः। यथापीहैकत्यः श्रमणो वा ब्राह्मणो वेति विस्तरेण पूर्ववत्। यत्किञ्चिदयं पुरुषपुद्गलः [2] प्रतिसंवेदयते सर्वं तदीश्वरनिर्माणहेतुकं वा पुरुषान्तरनिर्माणहेतुकं वेत्येवमादि। तद्यथा ईश्वरादिविषयहेतुवादिनः। केन कारणेनैवं[3]दृष्टिर्भवत्येवंवादी। आगमतो युक्तितश्च। आगमः पूर्ववत्। युक्तिः कतमा। यथापीहैकत्यस्तार्किको भवतीति पूर्ववत्। हेतौ च फले च [4] कामकारप्रवृत्तिदर्शनतः। तथा हि। सत्त्वा हेतुकाले च शुभे प्रवर्त्स्याम इत्यकामकाः पापेऽपि प्रवर्तन्ते। फलकाले च सुगतौ स्वर्गलोके देवेषूपपत्स्यामः [5] इत्यपायेषूपपद्यन्ते। सुखमुपभोक्ष्याम इति दुःखमेवोपभुञ्जते। येनैषामेवं भवति अस्ति स कश्चित्कर्ता स्रष्टा [6] निर्माता पितृभूतो भावानामीश्वरस्तदन्यो वेति॥

स इदं स्याद्वचनीयः। उद्दानं
सामर्थ्यासम्भवादन्तर्भावाभावविरोधतः
[7]सनिष्प्रयोजनत्वे[4]ऽपि हेतुत्वे दोषसम्भवात्॥

यत्तदीश्वरस्य निर्माणसामर्थ्यं तत्कच्चिदिच्छसि कर्मयोग[5]हेतुकं वाहेतुकं

---

1 By this word the Tib. translator understands *gṛhābhilāṣa* (khyim. so).

2 Tib adds after it *apy asti* (yan yod)

3 Tib srid. pa. MS looks to read *bhāva-*

4 From this one is to understand both *saprayojanatva* and *niṣprayojanatva* as clear from Tib. dgos. pa. dan. mi dgos. pa. med

5 MS *yogena°*. Here and in the following sentence according to Tib. *tat* refers to *īśvara.*

वेति। सचेत्कर्मयोगहेतुकं [Tib. 76b 1] तत्कर्मयोगहेतुकं जगदिति[1] न युज्यते॥ सचेदहेतुकं। तेन तदहेतुकं[2] जगदिति न युज्यते॥

कच्चिदिच्छसि ईश्वरो जगत्यन्त[3]र्भूतो [2]ऽनन्तर्भूतो वेति। सचेदन्तर्भूतः। जगत्समानधर्मा जगत्सृजतीति न युज्यते॥ सचेदनन्तर्भूतः। तेन मुक्तो जगत्सृजतीति [3] न युज्यते।

[४०ख] कच्चिदिच्छसि सप्रयोजनं वा सृजत्यप्रयोजनं वेति। सचेत्सप्रयोजनं। तेन तस्मिन्प्रयोजनेऽनीश्वरो जगदीश्वर [4] इति न युज्यते॥ सचेन्निष्प्रयोजनं। तेन नास्ति च प्रयोजनं सृजतीति च न युज्यते॥

कच्चिदिच्छसि ईश्वरहेतुकः सर्गस्तदन्योपादानहेतुको वेति। सचे[5]दीश्वरहेतुक एव। तेन यदेश्वरस्तदा सर्गः। यदासर्गस्तदेश्वर इतीश्वरहेतुकः सर्ग इति न युज्यते॥ स चे[6]त्तदन्योपादानहेतुकः। तेन तदिच्छाहेतुको वा स्यादिच्छां वा स्थापयित्वा तदन्योपादानहेतुकः। सचेत्तदिच्छाहेतुकः। सापीच्छा [7] किमीश्वरहेतुकैव तदन्योपादानहेतुका वा। सचेदीश्वरहेतुकैव। यदेश्वरस्तदेच्छा यदेच्छा [Tib. 77a. 1] तदेश्वर इति नित्यं सर्गेण भवितव्यं। स चेदन्योपादानहेतुका। तच्च[4] नोपलभ्यते। तत्र[5] च नेश्वरो जगदीश्वर [2] इति न युज्यते॥

इति सामर्थ्यतोऽपि। अन्तर्भावानन्तर्भावतोऽपि। सप्रयोजननिष्प्रयोजनतोऽपि। हेतुभावतोऽपि न युज्यते। तस्माद्योगविहित एषोऽपि वादः॥[6]

[हिंसाधर्मवादः]

[3]हिंसाधर्मवादः कतमः। यथापीहैकत्य इति विस्तरेण पूर्ववत्।[7] यज्ञेषु मन्त्रविधिपूर्वकः प्राणातिपातः। यश्च जुहोति यश्च [4] हूयते ये च तत्सहाया-

---

1 Tib des na dban. phyug. gi las dan. rnal hbyor. gyi rgyu las. hgro ba. hbyun no. MS adds *na* here and in the following sentence before *jagad* which in not in Tib.

2 See the preceding note. 3 Tib. *jagad* for *jagaty*

4 Here *tat* refers to *upādāna* as in Tib. reading len pa. yan

5 This too refers to *upādāna*, Tib. reading len pa. la.

6 For similar grounds of Mīmāmsists see Kumārila's Sloka-vārttika (*Sambandhākṣepaparihāra* section)

7 In the Xylograph the reading is snon for snam.

४० क, Tib. 76a. 7

स्तेषां सर्वेषां स्वर्गगमनाय भवतीति। केन कारणेनैवंदृष्टिर्भवत्येवंवादी भवतीति।[1] उत्संस्थ[2]वाद एष शठविठपितो[3] ननु युक्ति[5]मभिसमीक्ष्य व्यवस्थापितः। कलियुगे प्रत्युपस्थिते ब्राह्मणैः पौराणं ब्राह्मणधर्ममतिक्रम्य मांसं भक्षयितुकामैरेतत्प्रत्युपकल्पितं ॥[4]

अपितु[5] स इदं स्याद्वचनीयः कच्चिदिच्छसि योऽसौ मन्त्रविधिः [6] स धर्मस्वभावो वाधर्मस्वभावो वेति। सचेद्धर्मस्वभावः। तेनान्तरेणापि[6] प्राणातिपातं स्वमिष्टं[7] न निर्वर्तयति[8]। अधर्मधर्मी करोतीति न युज्यते॥ [7] सचेद्धर्मस्वभावः। तेन स्वयमनिष्टफलो धर्मोऽन्यमनिष्टफलं व्यावर्तयतीति न युज्यते।

एवं व्यावृत्ते च पुनः सत्युत्तरि वदेत्। [Tib 77b 1] तद्यथा नाम विषं मन्त्रविधिपरिगृहीतं न विनिपातयति। तद्वदिहापि मन्त्रविधिर्द्रष्टव्य इति॥

स इदं स्याद्वचनीयः। कच्चिदिच्छसि यथा मन्त्र[2]विधिर्बाह्यं विषं[9] प्रशमयति एवमाध्यात्मिकं रागद्वेषमोहविषमिति। सचेत्तथैव शमयति। स च प्रशमो न [3]कुत्रचित्कदाचित्कस्यचित्तथोपलभ्यत इति न युज्यते॥ सचेन्न प्रशमयति। तेन यथा मन्त्रविधिर्बाह्यं विषं प्रशमयति तथाधर्ममिति न युज्यते॥

कच्चिदिच्छसि मन्त्र[4]विधिः सर्वत्रगोऽसर्वत्रगो वेति। स चेत्सर्वत्रगः। इष्टः स्वजन आदिष्टो न हूयत इति न युज्यते॥ अथ सर्वत्रगः। तेन शक्तिरस्य व्यभिचरतीति न युज्यते॥

कच्चिदिच्छसि [5]मन्त्रविधि[४१क] हेतुमेव व्यावर्तयितुं समर्थ आहोस्वित्फल-

---

1 Tib adds *cet* (žes na), MS omits *iti*

2 Here the word *utsaṁstha-* as in the MS seems to be new. Tib. reads tshigs. las hdus. par smra. ba yin te, But it, too does not help in giving the sense

3 For *viṭhapitaḥ* (from *vi-√sthâ*) a Buddhist Sanskrit or Pali word, Tib. bsrgub. pa meaning *vihita*

4 See the Brāhmana-dhanikasutta in the Suttanipāta

5 Tib. *tatra* (de. la)  6 Tib. omits *api*.

7 Tib. adds here *phalaṃ* (hbras. bu).

8 Tib. hgrub ; MS *nivartayati*

9 MS *bāhyaviṣaṁ*, Tib. may suggest both But after three lines there is *bāhyam viṣam*.

४०ख, Tib. 77a. 4

मपि । स चेद्धेतुमेव । तेन फलशक्तिहीन इति न युज्यते ॥ सचेत्फल[6]मपि । तेन पशुरपि पशुकायं हित्वा देवकायं गृह्णातीति[1] न युज्यते ॥

कश्चिदिच्छसि योऽसौ मन्त्राणां प्रणेता स शक्तः[2] [7] कारुणिको वा । शक्तोऽकारुणिको वेति । सचेच्छक्तः कारुणिकः । तदान्तरेण प्राणातिपातं सर्वं लोकं स्वर्गं नयतीति [Tib. 78a 1] न युज्यते ॥ सचेदशक्तोऽकारुणिकः । तेन मन्त्रस्तस्य समृध्यतीति न युज्यते ॥

इति हि हेतुतोऽपि दृष्टान्ततो व्यभिचारतोऽपि फलशक्ति[2]हानितोऽपि मन्त्रप्रणेतृतोऽपि न युज्यते । तस्मादेषो[ऽपि] ' वादोऽयोगविहितः ॥

यच्च न धर्माय कल्पते तस्य लक्षणं वक्ष्यामि । यत्परव्याबाधकं[4] कर्म न च दृष्टं [3] दोषप्रतिक्रियं[5] तत्तावन्न धर्माय कल्पते । यच्च सर्वपाषण्डि[के]षु सिद्धा[6]निष्फलं । यच्च सर्वज्ञैरेकांशेन भाषितं[7]मकुशलमिति [4] स्वयमनोप्सितं च यत् । क्लिष्टेन च चेतसा यत्समुत्थापितं । विद्यादि[8]मङ्गलोपेतं च यत्[9] तदपि न धर्माय भवति ॥

---

1 Here the MS with two queries as noted in the following sentence quoted here does not give any satisfactory reading, nor do we get much help from Tib The MS reads .*paśvā* (?) *yūpam bhitvā* (?) *devādyartham vigṛhnātīti* In Tib after *tena* there is a subordinate clause its equivalent being not in MS, giving simply an example, but it itself is not clear to the editor des na hdod dgur. sgyur bahi grugs (?) can bžin du Then runs the Tib. text which is translated in the body phyugs. kyan. phyugs. kyi. lus. spans nas. lhahi. lus hdzin. par hgyur bas.

2 Tib nus , MS *saktah* 3 Tib. yan

4 Tib pha rol. gsod pahi , MS *punar avyābādhakam.*

5 In the Xylograph read gñen. po for gñan. po,

6 Tib *prasiddha* (grags. pa) for *siddha-*

7 Tib gsuns , MS bhāvitam

8 In Tib. *ādi* is omitted. Here *vidyā* is used according to Tib. (rig. snags), in the sense of a charm or a magic formula

9 Tib. adds here *svayam nānāgamohitam ca yat* (ran. bžin. gyis. lun du ma. btsan pa gan yin. pa )

४१ क, Tib. 77b 5

[अन्तानन्तिकवादः]

[5]अन्तानन्तिकवादः[1] कतमः। तद्यथापीहैकत्यः श्रमणो वा ब्राह्मणो वा लौकिकध्यानसंनिश्रयेणान्तसंज्ञी[2] लोकस्य विहरत्यनन्तकसंज्ञी [6] उभयसंज्ञी नोभयसंज्ञी। यथासूत्रमेव विस्तरेण। एवंदृष्टिर्भवत्येवंवादी अन्तवाल्लोँको यावन्नैवान्तवान् नानन्त इति। [7] अत्र कारण[3]मुक्तरूपमेव वेदितव्यं।[4] पुद्गलश्च॥

तत्रोच्छेदपर्यवसानतो लोकस्यान्तं समन्वेषमाणो यदा संवर्त [Tib 78b 1] कल्पं समनुस्मरति तदान्तकसंज्ञी भवति। यदा विवर्तकल्पं तदानन्तकसंज्ञी। देशवैपुल्यपर्यवसानतो वा पुनः समन्वेषमाणो यदाधोऽवीचेः [2] परेण नोपलभते[5]। ऊर्ध्वं च चतुर्थध्यानात्परेण नोपलभते। तिर्यक् सर्वत्र प[रे]णोप[6]लभते। तदोर्ध्वमधश्चान्तकसंज्ञी तिर्यगनन्तसंज्ञी। [3] तद्विपक्षेण वा पुनर्व्यञ्जनविशेषाभिनिवेशो[7] न त्वर्थाभिनिवेशो (?) नैवान्तकसंज्ञी नाप्यनन्तकसंज्ञी॥

स इदं स्याद्वचनीयः। [4, किमिच्छसि ततः संवर्तकल्पादर्वागस्ति लोक[8]प्रवृत्तिर्नवेति। सचेदस्ति। अन्तवाल्लोँक इति न युज्यते॥ सचेन्नास्ति। तेन लोके[9]स्थितोऽन्तं लोक[10]स्यानुस्मरतीति [5] न युज्यते॥

इत्यर्वाग्भावतोऽपि न युज्यते। तस्मादेषोऽपि वादोऽयोगविहितः॥

---

1 See Dīgha Nikāya, I. pp 22ff

2 Tib. mthah yod par. hdu ses. pa , MS *anantaka*°

3 Tib. adds here *pūrvam* (snar)

4 This punctuation is as in the MS, but according to Tib the *danda* is to be put after *pudgalaś ca* (hdir yan gtan tshig. pa. dan/ gan zag ni snai bstan. pahi tshul bžin rigs par. byaho//). But this cannot be construed. Somehow or other *pudgala* here may be connected with *loka* referred to above

5 MS *labhyate* , Tib. lit *paśyati* (mthon), so in the following sentence

6 Tib pha rol. yan. Accordingly here is *api* for *upa.*

7 Tib mnon. par. žen. la., MS °*pratinirdeśo.*

8 Tib hjig. rten. hbyun ba., MS *cāloka*°

9 Tib hjig rten na , MS *āloka.*

10 Tib. rjes su.; MS *lokasya na.*

४१ क, Tib. 78a. 5

[अमराविक्षेपवादः ]

अमराविक्षेपवादः कतमः। यथापीहैकत्यः।......[1] [Tib 79a. 2] मन्दमोमुह एव। [तत्र][2] प्रथमो मृषावाद[भयभी]तो[3]ऽज्ञानभयभीतश्च स्पष्टं न व्याकरोति न जानामीति। द्वितीयः[4] [3][5]पर्यनुयोगभयभीतो [४१ख] मृषा[6]-वादभयभीतो मिथ्या[7]दृष्टिभयभीतः[8] स्पष्टं न व्याकरोत्यधिगतवानस्मीति। तृतीयो [4] मिथ्यादृष्टिभयभीतः पर्यनुयोगभयभीतः स्पष्टं न व्याकरोत्य-हमधिगतवानस्मीति[9]। ते [5] त[त्वा][10]प्यन्येनान्यं प्रतिसं[ह]रन्तो[11] वाचा विक्षेपमापद्यन्ते। चतुर्थः पर्यनुयोगभयभीत एवं सर्वेण सर्वं[12]मभ्युदयमार्गो निःश्रेयसमार्ग इति [6] व्यञ्जनमात्रकुशलो[13]ऽपि स्पष्टं न व्याकरोति मोमुहोऽ-स्मीति। स परमेव संपृच्छति। तदनुविधानतो वाचा विक्षेपमापद्यते।

---

1 Here is a lacuna in the MS of about two lines. In the MS here a few unconnected words or letters are however found giving no sense (Tib 78b 6—79a 1) The Tib Text is not quite clear containing a few words which are illegible 'For this theory see Dīgha Nikāya I, 24 and its commentary.

2 Tib. de la 3 Tib smra bas. hjigs shin. hdzom. pa dan

4 Tib adds here *drstibhayabhītah* (lta bas. hjigs. shin. hdzom. pa dan).

5 MS adds *suviśāradah sva adhikha* (?) (It appears for *svādhigatavān asmiti*—See below). It is not in Tib

6 In Tib *mrsā* is omitted

7 In Tib the order of these three adjectives is as *mithyā mrsā°* and *paryanu °* But see the next sentence in the text

8 In Tib, *mithyā* is omitted

9 For *aham adhi°* Tib bdag. ni. nes, pa. ma. yin, no. žes , lit *na me niścaya iti* or *nāham niścinomīti*. For this the MS reads *anirmito*' (?) *smīti* 10 dei

11 For *apy anyenānyam pratisam[ha]ranto* MS read *pratisamrato* For the last word Tib gžan dan gžan du rlu skur. bar byed pas It appears to suggest *anyathānyathā vātapreranena*. Somehow or other it is to be construed

12 Here in Tib this phrase, *sarvena sarvam* is construed with *akuśalatvād* not in MS before *momuho'smīti* which follows.

13 Tib omits *kuśalah*.

तेषां वादानां कारण[7]मप्युक्तरूपं। पुद्गलोऽप्युत्तरमपि यथासूत्रमेव। यत एव भीतास्तत्र परा[1] विहरन्तीति। यत्र पुनरेषामेवं भवति। एवमागते प्रतिवादिनि तत्र शाठ्येन प्रतिपत्तव्यमिति। [Tib 79b 1] इदमत्र दृष्टिगतं वेदितव्यं। तस्मादेषोऽपि वादोऽयोगविहितः॥

[अहेतुकवादः]

अहेतुकवादः[2] कतमः। सोऽपि ध्यानसंनिश्रयेण तर्कसंनिश्रयेण च द्विविधो [2] यथासूत्रमेव वेदितव्यः। केन कारणेन तर्कसंनिश्रयेणैवं पश्यत्यहेतुकमुत्पन्न आत्मा लोकश्च समासेन। अनभिसन्धिपूर्वकमाध्यात्मिकबाह्यानां भावानामपरिमाणं वै[3]चित्र्यमुपलभ्य। हेतूनां चैकदा वैचित्र्यमुपलभ्य। अकस्मादेकदा वायवो वान्ति एकदा न वान्ति। अकस्मादेकदा नद्यः स्यन्दन्ति एकदा न स्यन्दन्ति। अकस्मादेके वृक्षाः [4] पुष्पन्ति फलन्ति एकदा न पुष्पन्ति न फलन्तीत्येवमादि॥

स एवं स्याद्वचनीयः। किमभावं वानुस्मरस्यात्मानं वा। सचेदभावं। [5] अभाव[म]संस्तुतमपरिचितं समनुस्मरसि चेति न युज्यते॥ सचेदात्मानं। तेनाहं पूर्वं नाभूवं पश्चात्समुत्पन्न इति न युज्यते॥

इत्यभावानुस्मरणतोऽप्यात्मानुस्मरणतोऽप्याध्यात्मिकबाह्यानां भावानां निर्हेतुकवैचित्र्यतोऽपि [Tib. 80a. 1] सहेतुकवैचित्र्यतोऽपि न युज्यते। तस्मादेषोऽपि वादोऽयोगविहितः॥

[उच्छेदवादः]

उच्छेदवादः[1] कतमः। यथापीहैकत्यः श्रमणो वा ब्राह्मणो वैवंदृष्टिर्भवत्येवं[2]वादी यावदात्मा रूप्यौदारिकश्चातुर्महाभूतिकस्तिष्ठति[४२क] म्रियते यापयति[5] तावत्सरोगः सगण्डः सशल्यः [सज्वरः सपरि[3]तापः][6]। यतश्चात्मो-

---

1 For this Tib. *sthitah* (gnas) This shows that *tatra parāh* means *tannisthāh*

2 See Majjhima Nikāya, 1. 408

3 Tib. rgyu med pa. las ; MS *sahetukam.*

4 See Vinaya, I 235 , III 2 , Dīghā. I 34, 55

5 Generally for it Tib reads bžes or gžes, but here it appears to read snod (not quite legible), it does not, however, give any sense.

6 Tib. rims. dan bcas pa yons su. gdun ba dan bcas. pa yin. te/

४१ ख, Tib. 79a. 7

च्छिद्यते विनश्यति न भवति परं मरणादियतात्मा समुच्छिन्नो भवति ॥ एवं दिव्यः कामावचरो दिव्यो रूपावचरोऽरूप्याकाशानन्त्या[4]यतनोपगो यावन्नैवसंज्ञानासंज्ञायतनोपगः । यथामूलमेव विस्तरः । तद्यथा सप्तोच्छेदवादिनः ॥

केन कारणेनैवंदृष्टि[5]र्भवत्येवंवादी । आगमतो युक्तितश्च । आगमः पूर्ववत् । युक्तिः कतमा । यथापीहैकत्यस्तार्किको भवति पूर्ववत् । तस्यैवं भवति । सचेदात्मा [6] परं मरणात्स्यादकृताभ्यागमदोषः कर्मणां भवेत् । सचेदात्मा सर्वेण सर्वं[1] न स्यात् । तेनोपभोगोऽपि कर्मफलानां न भवेत् । उभयथायुज्यमानतां पश्य[7]न्नेवंदृष्टिर्भवत्येवंवादी आत्मोच्छिद्यते विनश्यति न भवति परं मरणादिति । तद्यथा कपालानि भिन्नान्यप्रतिसन्धिकानि भवन्ति । अश्मा वा भिन्नोऽप्रतिसन्धिको भवति । तद्वदत्रापि नयो द्रष्टव्यः ॥

[Tib 80b 1]स इदं स्याद्वचनीयः । कच्चिदिच्छसि स्कन्धा वा समुच्छिद्यन्ते । [आत्मा वा समुच्छिद्यते] ।[2] सचेत्स्कन्धाः । तेन स्कन्धा अनित्याः [हेतु][3]फलपरम्पराः [2]प्रवृत्ताः समुच्छिद्यन्ते चेति न युज्यते ॥ सचेदात्मा [समुच्छिद्यते][4] रूप्यौदारिकश्चातुर्महाभूतिकः सरोगः सगण्डः सशल्यः [सज्वरः सपरि[3]तापो ][5] दिव्यः कामावचरो दिव्यो रूपावचरो रूप्याकाशानन्त्यायतनोपगो यावन्नैवसंज्ञानासंज्ञायतनोपग इति । [4] [एवं][6] स्कन्धसमुच्छेदतोऽपि न युज्यते ॥ तस्मादेषोऽपि वादोऽयोगविहितः ॥

[नास्तिकवादः]

नास्तिकवादः[7] कतमः । यथापीहैकत्यः श्रमणो वा ब्राह्मणो वैवंदृष्टिर्भवत्येववादी । नास्ति दत्तं नास्तीष्टमिति [5] विस्तरेण यावन्न लोकेऽर्हन्निति[8] । एवंदृष्टिर्भवत्येववादी । सर्वं सर्वलक्षणेन नास्तीति ॥

---

1 Tib. *atyantam* (gtan) for *sarvena sarvam*

2 Tib hon te. bdag. chad. par. hgyur. bar hdod

3 Tib. rgyu dan

4 Tib chad.par hdod. na ni. Thus here it adds *iti icchasi*.

5 Tib. rims dan. bcas. pa./yons su gdun ba. dan. bcas pa dan/

6 Tib de. ltar

7 See Samyutta Nikāya, III. 73 , Majjhima Nikāya, I 403

8 Tib. hjig rten na dgra. bcom, pa med. do źes. bya. bahi bar. du/ MS *loko' abhinna iti* for *loke 'rhann iti* For the *Nāstika-vāda* See Digha Nikāya, I. 55 , Sūtrakrtāngasūtra, I. 1. 11, ff.

४२ क, Tib. 80a 3

केन कारणेनैवंदृष्टि[6]र्भवत्येवंवादी। आगमतो युक्तितश्च। [1]आगमः पूर्ववत्। युक्तिः कतमा। यथापीहैकत्यस्तार्किको भवतीति पूर्ववत्। [स][2] लौकिकध्यानसंनिश्रयेण[7]कृत्स्नमायुरेकत्य[3] पश्यति दानपतिं[4]। पश्यति चैनं च्युतं[5] कालगतं नीचेषु कुलेषु प्रत्याजायमानं। [दरिद्रेषु दीनेषु निर्धनेषु][6]। तस्यैवं भवति। [Tib 81a 1] नास्ति दत्तं। नास्तीष्टं। नास्ति हुतं। पुनः पश्यत्येकत्यं[7] सुचरितचारिणं वा दुश्चरितचारिणं वा। पश्यति चैनं च्युतं कालगतमपाय[2]दुर्गतिविनिपाते नरकेषूपपद्यमानं। सुगतौ वा स्वर्गलोके देवेषूपपद्यमानं। तस्यैवं भवति। नास्ति सुचरितं। नास्ति दुश्चरितं। नास्ति सुचरित[3]दुश्चरितानां कर्मणां फलं विपाकः॥ पुनः पश्यत्येकत्यं क्षत्रियं ब्राह्मणजातावुपपद्यमानं। वैश्यजातौ शूद्रजातौ। ब्राह्मणं वा[8] क्षत्रियजातौ वैश्यजातौ[4]शूद्रजातौ। एवं वैश्यं शूद्रं। तस्यैवं भवति। नास्त्ययं लोकः परलोकात्क्षत्रियादीनां क्षत्रियादित्वाय। [5] नास्ति परलोकोऽस्माल्लोकात्क्षत्रियादीनां क्षत्रियादित्वाय। [४२ख] वीतरागं पुनः पश्यत्यधोभूमावुपपद्यमानं। मातरं वा पुनः पश्यति दुहितृभावायोपपद्यमानां। दुहितरं वा पुनर्मातृभावाय। [6] पितरं पुत्रभावाय। पुत्रमेव वा पुनः पितृभावाय। तस्य मातापितृनियमं दृष्ट्वा भवति नास्ति माता। नास्ति पिता। एकत्यस्य वा पुद्गलस्योपपत्तिं समन्वेषमाणो न पश्यति। [7] स च पुद्गलोऽसंज्ञिकेषु वोपपन्नो भवत्यारूप्येषु वा। परिनिर्वृतो वा। तस्यैवं भवति। नास्ति सत्त्व उपपादुक[9]स्तदायतनमप्रजानतः

---

1 Tib adds here *tatra* (de la) 2 Tib de.

3 After this Tib has thog. thog. du. (read *tu* for *du*) the meaning of which is not quite clear

4 In the Xylograph the reading is sbyin. bdag for sbyin. pa. dag.

5 Tib. adds *mrtyu* (hchi. ba)

6 Tib reads dbul. po dan/ bkren. pa dan /nor. med pa. dag. tu

7 MS adds here *susamāpta* not in Tib.

8 MS adds *kṣatriyam* vā.

9 Omitted in Tib.

[Tib. 81b 1] अर्हत्त्वाभिमानिको वा पुनः स्वयमात्मनः उपपत्तिं पश्यति च्यवमानः। तस्यैवं भवति। न सन्ति लोकेऽर्हन्त इति विस्तरेण। केन कारणेनैवंदृष्टिर्भवत्येवंवादी नास्ति सर्वं सर्वलक्षणेनेति।[1] [2] ये ते तथागतभाषिताः सूत्रान्ता गम्भीरा गम्भीराभासा[2] निरभिलप्यधर्मतामारभ्य। नान्यथाभूतमप्रजानतः। [3] अयोनिशश्च[3] धर्मलक्षणं व्यवस्थापयतो नास्तिदृष्टिरुत्पद्यते। येनास्यैवं भवति नास्ति सर्वं सर्वलक्षणेनेति॥

स इदं स्याद्वचनीयः। कच्चिदिच्छसि अस्त्युपप[4]द्य वेदनीयं कर्म [अपरपर्यायवेदनीयं।][4] आहोस्वित्सर्वमेवोपपद्य वेदनीयं।[5] स चेदस्ति। तेन नास्ति दत्तं नास्तीष्टं। नास्ति हुतं। [5] नास्ति सुचरितं। नास्ति दुश्चरितं। नास्ति सुचरितदुश्चरितकर्मणां फलविपाकः[6]। नास्त्ययं लोकः। न परलोक इति युज्यते। स चे[6]न्नास्त्यपरपर्यायवेदनीयं। तेन योऽप्यन्यः शुभाशुभकर्माभिसंस्कारः स सकृदुपपद्य[7] शुभाशुभकर्मणां विपाकं[8] प्रतिसंवेदयत इति न युज्यते॥

[7] कच्चिदिच्छसि या[9] यं जनयति माता वा सा तस्य न वेति। यो यस्य[10] वीजात्संभवति पिता वा स [तस्य][11] न वेति। सचेन्माता वा पिता वा। नास्ति माता। नास्ति पितेति न युज्यते। सचे [Tib. 82a. 1]न्न माता न

---

1 Tib thams cad. ni. mtshan. ñid. thams. cad. kyis. med. do. The Xylograph is here very indistinct, MS with a query mark *sarvatra ksane* (?) *meneti*.

2 Elsewhere we have *gambhīrabhāsāh*.

3 Tib. tshul. bžin. ma. yin pas , MS *ayoniś ca*.

4 Tib. lan. grans. gžan. la. myon. bar. hgyur. bahi. las. kyaṇ. yod. pa. ham.

5 According to Tib. the word *eva* (kho. nar.) is to be put after *vedanīyam*.

6 MS adds *iti* not supported by Tib.

7 MS adds here *ca* not in Tib

8 Tib rnams. kyi, MS °*karmano*.

9 MS *yo*.

10 In Tib. read gan. gi. for gan. gis.

11 Tib. dehi ; MS omits it.

४२ख, Tib. 81b. 1

पिता[1] तेन जनयति। तद्बीजाच्च सम्भवति। स च माता पितेति न युज्यते॥ यदा माता पिता भवति। तदा [न] दुहिता न पुत्रः[2]। यदा दुहिता पुत्रो भवति। तदा न माता न पिता[3]।

[2]कच्चिदिच्छसि अस्ति तदायतनं[4] यत्रोपपद्यमानः सत्त्वो न दृश्यते दिव्येन चक्षुषा। नास्ति वेति[5]। सचेदस्ति। तेन नास्ति सत्त्व उपपादुक[6] इति[3] न युज्यते॥ सचेन्नास्ति। तेन संज्ञावैराग्यं रूपवैराग्यं त्रैधातुकवैराग्यमपोदितं भवतीति न युज्यते॥

कच्चिदिच्छसि अस्त्यर्हत्त्वाभिमानी [4] न वेति। सचेदस्ति। न सन्ति लोकेऽर्हन्त इति न युज्यते। सचेन्नास्ति। तेन योऽपि कश्चि[7]द्योनिशो वृत्तो[8] विपरीतं मन्यते सोऽप्यर्हन्निति[5] न युज्यते॥

स इदं स्याद्वचनीयः। कच्चिदिच्छसि [अस्ति][9] परिनिष्पन्नलक्षणो धर्मः परतन्त्रलक्षणः परिकल्पितलक्षणो [नास्ति वा]। [10]सचेदस्ति। तेन[11] सर्वं[6]

---

1 Tib. adds *api* (yan) after both *mātā* and *pitā*

2 Tib bu, mo. dan bu bo (?) dan. ma yin la.

3 This is what we have in Tib. reading gan. gi tshe. ma. dan. phar. gyur pa. dehi tshe. ni bu. mo dan. bu. bo (?). ma. yin, la./| gan. gi tshe. bu, mo. dan. bu. bor(?). gyur pa. dehi. tshe. ni. ma. dan pha. ma. yin no.// Here MS reads *yadā mātā pitā bhavati/ tadā duhitā na putraḥ/ yadā pitā mātā bhavati/tadā na duhitā na putraḥ.*

4 In Tib, for *āyatana* generally we have skye. mched, but here it reads gnas. *sthānā*.

5 For *vā* Tib ham; MS *ca*.

6 For this word in Tib. we have generally brdsus. te. skye. ba. (or skye. pa.) but here Tib. omits the word brdsus

7 Tib. omits *kaścit*.  8 Tib. žugs. MS *prayuktaḥ*.

9 Tib yod. pa. ham/ hon. te. med. par hdod. The three words *parini°* *parata°* and *parika°* are put in the objective case, but owing to appropriateness they are given in the nominative case according to Tib.

10 Tib. hon. te. med. par

11 Tib. des. for *°asti/tena* MS *ātri na*.

४२ ख, Tib. 82a. 1

सर्वेण लक्षणेन नास्तीति न युज्यते ॥ सचेन्नास्ति। तेन नास्ति विपर्यासो नास्ति संक्लेशो नास्ति व्यवदानमिति न युज्यते ॥

इत्युपपद्या [४३क]परपर्याय [7] वेदनीयतोऽपि अव्यभिचारतोऽपि उपपत्त्यायतनसद्भावतोऽपि अभिमानसद्भावतोऽपि त्रि[1]लक्षणतोऽपि न युज्यते ॥ तस्मादेषोऽपि वादोऽयोगविहितः ॥

[ अग्रवादः ]

अग्र[Tib. 82b. 1]वादः कतमः। यथापीहैकत्यः श्रमणो वा ब्राह्मणो वैवंदृष्टिर्भवत्येवंवादी। ब्राह्मणोऽग्रो वर्णो। हीनोऽन्यो वर्णः। ब्राह्मणः शुक्लो वर्णः। कृष्णोऽन्यो वर्णः। ब्राह्मणाः शुध्यन्ते [2] नाब्राह्मणाः। ब्राह्मणा ब्रह्मणः पुत्रा औरसा मुखतो जाता ब्रह्मजा ब्रह्मनिर्गता[2] ब्रह्मपार्षदा इति। [3] तद्यथा कलियुगिका ब्राह्मणाः। केन कारणेनैवंदृष्टिर्भवत्येवंवादी। आगमतो युक्तितश्च। आगमः पूर्ववत्। युक्तिः कतमा। यथापीहैकत्यस्तार्किको भवतीति[3] [4] विस्तरः। जातिब्राह्मणानां[4] प्रकृतिशीलतां चोपलभ्य [लाभ-][5] सत्कारतां[6] चोपादाय ॥

स इदं स्याद्वचनीयः। कच्चिदिच्छसि तदन्यानेव वर्णान्मात्[5]जान् योनिसम्भवान्।[7] आहोस्विद्ब्राह्मणवर्णमपि। सचेदन्यानेव। तेन प्रत्यक्षं[8] योनिजा[त]ता[9] मातृसम्भवता ब्राह्मणवर्णस्यापोदिता भवतीति [6] न युज्यते ॥ सचेद्ब्राह्मणवर्णोऽपि [तादृशो भवतीति][10] तेन ब्राह्मणा अग्रो वर्णो हीनोऽन्यो

---

1 For Tib. tri (gsum) MS *prakāra*.

2 Tib. -*nirmitāh*. (sprul. paho) for *nirgatāh*.

3 Tib. žes. bya ba, MS omits *iti*

4 Tib. bram zehi rigs. MS *Brahmanām* with a query mark.

5 Tib. rñed pa. dan.

6 MS reads here *satkārakāmatām* with a query mark. There is nothing in Tib for -*kāmatām*.

7 Tib. *jarāyujātā* (mnal. nas. byun. ba.) or *jarāyusambhūtān*, so also below for *yoni-sambhūtān*.

8 Tib, mnon. sum. du In MS it is compounded with the next word.

9 Tib. *jarāyujatā* (mnal. nas, skyes). In fact here *tā* is not in Tib. but it is found that sometimes it (ñid) is to be supplied where it is actually not used, but wanted and sometimes it is to be ignored where it is not required at all.

10 Tib. de. lta. yin. na. ni.

४२ ख, Tib. 82a. 6

वर्ण इति न युज्यते ॥ यथा योनिजं मातृसम्भूतमेवमकुशलकारिणं[7] कुशलकारिणं च कायवाङ्मनोदुश्चरितकारिणं कायवाङ्मनःसुचरितकारिणं दृष्टधार्मिकमनिष्टफलं प्रत्यनुभवन्तमिष्टं वा पुनः साम्परायिकं। अपायेषूपपद्यमानं [Tib. 83a. 1] सुगतौ स्वर्गलोके देवेषूपपद्यमानं त्रयाणां वा स्थानानां सम्मुखीभावाद् [1]यतो वा मातुः कुक्षावुपपद्यमानं लौकिक[2]शिल्पस्थान-कर्मस्थानं कुशलमकुशलं वा राजानं तद्भृत्यं[2] वा दक्षमुत्थानसम्पन्नं[3] वा राजसंग्राह्यं वा उपस्थानायासंग्राह्यं वा[4] व्याधिधर्मकं वा [3] जराधर्मकं वा मरणधर्मकं वा[5] ब्राह्मान् विहारान्भावयित्वा ब्रह्मलोक उपपद्यमानं वा बोधिपक्ष्यधर्मान् भावयन्तं वाभावयन्तं वा श्रावकबोधिं प्रत्येक[4] [बुद्ध][6]बोधिमनुत्तरसम्यक्सम्बोधिमभिसम्बुध्यमानं वानभिसम्बुध्यमानं वा [ तादृशं च ][7]।

कच्चिदिच्छसि योनित एव यो विशिष्टः[8] स वर [5] आहोस्विच्छ्रुतेन शीलेन वा पुनः। सचेद्योनित एव। तेन यज्ञे यः श्रुतप्रधानः शीलप्रधानः स प्रमाणं परिग्राह्य इति न युज्यते ॥ सचे[6]च्छ्रुतेन वा शीलेन[9] वा तेन ब्राह्मणा अग्रो वर्णो हीनोऽन्यो वर्ण इति न युज्यते ॥

इति योनितोऽपि कर्मतोऽप्युपपत्तितोऽपि शिल्पकर्मस्थानतो[7]ऽप्याधिपत्यतोऽपि तत्सम्परिग्रहतोऽपि ब्राह्मविहारतोऽपि बोधिपक्ष्यभावनातोऽबोद्ध्रधिगमतोऽपि न युज्यते ॥ तस्मादेषोऽपि वादोऽयोगविहितः ॥

[शुद्धिवादः]

[Tib. 83b. 1] शुद्धिवादः कतमः। यथापीहैकत्यः श्रमणो वा ब्राह्मणो

---

1 MS yo *vā savāt* (?)

2 MS *tadābhṛttam* (with a query mark after *bhr*. as well as a suggestion of *-mā* - for -bhr). Tib dehi. tsal -zahm. but it is not clear to me. 3 But Tib. sgrub. pa byed. pa. *sādhakam* (?).

4 Tib. not clear 5 MS adds here *na vā* not in Tib.

6 Tib. ran. sans. rgyas. kyi. byan. chub. dan/ MS *pratye bodhim*

7 Tib. yaṅ. de. dan *hdraho*. It is not quite clear. It appears that in order to make the sentence complete the verb *icchasi* is to be supplied here from above.

8 Tib. adds *āryah* (hphags. pa.)

9 Tib. thos. pa. ham. tshul. khrims. kyis. MS reads srutam. silaṃ vā.

४२ ख, Tib. 82b. 6

वैवंदृष्टिर्भवत्येवंवादी। यतश्चात्मा मुक्ति[1] चित्तवशितां चानुप्राप्तो योगवशितां चानुप्राप्तो दिव्यैः पञ्चभिः कामगुणैः समर्पितः समन्वङ्गीभूतः [2] क्रीडति रमते परिचारयति। स दृष्टधर्मनिर्वाणप्राप्तिशुद्ध्या शुद्धो भवति।[2] यतश्च विविक्तं कामैर्विविक्तं पापकैरकुशलैर्धर्मैः [सवितर्कं [3] सविचारं विवेकजं प्रीतिसुखं[[3]प्रथमं ध्यानमुपसम्पद्य विहरति। यावच्चतुर्थं ध्यान[४३ख]मुपसम्पद्य विहरति। स परमदृष्टधर्मनिर्वाणप्राप्तिशुद्ध्या शुद्धो[4] भवति। यथापि तदेवं दृष्टिर्भवत्येवंवादी सर्वपापान्य[4]स्या[प]हरति यो[5] नद्यां सुन्दरिकायां स्नाति। यथा सुन्दरिकायामेवं बाहुदायां गयायां [5] सरस्वत्यां नद्यां 'गङ्गायां।[6] स तत्रोदकस्नानेन[7] शुद्धं मन्यते॥

यथापीहैकत्यः कुक्कुरव्रतेन[8] शुद्धिं मन्यते गोव्रतेन[9] [6] नकुल-(?)[10] व्रतेन[11]-

---

1 Tib. hgral. ba. MS *yuktih* (suggesting *yuktim* with a query mark).

2 Tib. adds here *iti* (žes bya ba.).

3 Tib. rtog. pa. dan. bcas. pa. dpyod. pa. dan. bcas pa. dben. pa las. skyes. pahi dgah. ba. dan. bde. ba. can./.

4 For *pāpāni* Tib *āvaranāni* (sgrib. pa.).

5 Tib adds, here *kaścit* (la. la).

6. Tib. adds *tādṛśyām ca* (de. dan. hdraho). It adds further: *ityevam dṛṣṭir bhavatyevamvādī* (žes de. ltar. lta. žin de. skad. smra. ba lta. bu. ste

7 Tib chus. khrus. byas. pas , MS *snā[na mā]trena.*

8-9 For *kukkura*-and *go-vrata*, etc. see Majjhima N i, 387, Dīgha N. iii. 6 , AK iii 86 The following is taken from the last book: *Kukkura-govratādīni/ādiśabdena mārga-vratādīni grhyante/ nirgranthādinām/ ādiśabdena pāndarabhiksvādīnām grahaṇam/ ...brāhmaṇādīnām dandājinam/ pāsupatānām jaṭābhasma/ parivrājakānām tridandam [ / ādiśabdena kāpālikādīnām kapāladhāraṇādi grhyante/ tat samādānam śīlavratopādānam/*

(*a*) In Mahāvyutpatti ( clxxix ) we have Mahāvratin (20) Mṛgaśrngavratin, (22) go°, (23) Māyura° (25) Gośrnga°, (30) Pandarabhiksu, etc.

10 For this word Tib. clearly reads sre. mo. Skt. *nakula* 'weasel'.

४२ख, Tib. 84a. 1

नग्नव्रतेन भस्मव्रतेन कष्टव्रतेन[1] निष्ठाव्रतेने[2]त्येवंभागीयैर्व्रतसमादानैः [7] शुद्धं मन्यते। तद्यथा दृष्टधर्मनिर्वाणवादिन उदकशुद्ध्यादिवादिनश्च ॥

केन कारणेन स एवंदृष्टिर्भवत्येवंवादी। आगमतो युक्तितश्च। आगमः [Tib. 84a. 1] पूर्ववत्। युक्तिः कतमा। यथापीहैकत्यस्तार्किको भवतीति विस्तरः ॥ स सर्वत्र[3] ईशित्ववशित्वप्राप्तः[4] कामेश्वरो भवति योगे[2]श्वरः। तच्चेशित्ववशित्वं यथाभूतं न प्रजानाति। यथापीहैकत्य आत्मनिग्रहेणात्मनः पापविमोक्षं पश्यति कृतापराधो वापराधविमोक्षं ॥

[3] स इदं स्याद्वचनीयः। कच्चिदिच्छसि योऽसौ पञ्चभिः कामगुणैः क्रीडति[5] स कामवीतरागो वावीतरागो वेति। स चेद्वीतरागः क्रीडति रमते परिचारयतीति न युज्यते। स चेदवीतरागो मुक्तः शुद्ध इति न युज्यते ॥

कच्चिदिच्छसि योऽसौ चतुर्थंध्यानमुपसम्पद्य विहरति स सर्व[5]वीतरागो वासर्व[6]वीतरागो वा। सचेत् सर्ववीतरागः यावच्चतुर्थं ध्यानमुपसम्पद्य विहरतीति न युज्यते। [6] सचेन्न सर्ववीतरागः। मुक्तः शुद्ध इति न युज्यते ॥

स इदं स्याद्वचनीयः। किमाध्यात्मिकी[7] वा शुद्धिर्बाह्या वेति। सचेदाध्यात्मिकी। [7] तेन तीर्थ[8]स्नानेन विशुध्यत इति न युज्यते। सचेद्बाह्या। तेन तथैव सरागः सद्वेषः समोहः। बाह्यं मल[[Tib. 84b. 1]मपकर्षणेन[9] शुध्यति ॥

कच्चिदिच्छसि शुचिवस्तूपादानतो वा शुद्धिमशुचिवस्तूपादानतो वेति। सचे[च्छुचि]वस्तूपादानतः[10]। तेन [2] कुक्कुरादयोऽशुचिसम्मता लोक इति

---

1 Tib. suggests *ghora caṇḍa-* or *ugra* (drag. po.) for *kaṣṭa*

2 For *niṣṭhā* Tib. mthar thug.

3 Tib. thams. cad. du. MS *sarva*.

4 Tib. suggests prāptyā (thob nas.).

5 Both in MS and in Tib. *ramati paricārayati* as expected is omitted.

6 Tib omits *sarva-*.

7 MS *ādhyātmika*.

8 Tib. chu dog not in Sarat chandra's Dictionary.

9 Tib. bsal. bas. , MS *apakarse*

10 Tib. omits *sacec° nataḥ*. MS omits *-śuci*.

४२ ख, Tib. 83b. 6

तदुपादानेन शुद्धि नं युज्यते ] सचेदशुचिवस्तूपादानतः । तेन प्रकृत्या शुचि [3] वस्तु शुद्धये संवर्तत इति न युज्यते ॥

कच्चिदिच्छसि सति कुक्कुरादिव्रतोपादाने कायदुश्चरितादिमिथ्याप्रतिपत्तिः शुद्धये संवर्तते कायसुचरितादिसम्यक् [4]प्रतिपत्तिर्वेति । स चेन्मिथ्याप्रतिपत्तिः । तेन मिथ्या च प्रतिपद्यते शुद्ध्यते चेति (४४क) न युज्यते । स चेत्सम्यक्प्रतिपत्तिः । तेन कुक्कुरादि[5] व्रतमपार्थकमिति तेन शुद्धिरिति न युज्यते ॥

इति वीतरागतोऽपि [अवीतरागतोऽपि[1] आध्यात्मिकबाह्यतोऽपि अशुचि-शुच्युपा[6]दानतोऽपि मिथ्यासम्यंक्प्रतिपत्तितोऽपि न युज्यते ॥ तस्मादेषोऽपि वादोऽयोगविहितः ॥

[कौतुकमङ्गलवादः]

कौतुकमङ्गलवादः कतमः । यथापीहैकत्यः श्रमणो ब्राह्मणो वैवं[7]दृष्टिर्भवत्येवंवादी । आदित्यचन्द्रग्रहतिथिवैगुण्येन मनोरथानामसिद्धि[2]र्भवति । तदानुगुण्येन च मनोरथसिद्धिः । स [Tib. 85a. 1] तदर्थं चादित्यादिपूजां प्रकल्पयति ।[3] होमजापादर्श[4]पूर्णकुम्भविल्व[फल][5]शङ्खादीन् प्रत्युपस्थापयति । तद्यथा[2] गाणितिकाः ।

केन कारणेनैवंदृष्टिर्भवत्येवंवादी । आगमतो युक्तितश्च । आगमः पूर्ववत् । युक्तिः कतमा । यथापीहैकत्यस्तार्किको भवतीति पूर्ववत् । स [3] च लाभी भवति लौकिकानां ध्यानानां । अर्हत्सम्मतश्च भवति महाजनकायस्य[6] । स आत्मनः सम्पत्तिकामैः समृद्धिकामैस्तत्र प्रश्नं पृष्टः प्रतीत्यसमुत्पन्नां [4] कर्मगतिं यथाभूतमप्रजानन्न्येनादित्यचन्द्रग्रहनक्षत्रतिथिसमुदाचारेण शुभाशुभानां कर्मणां सत्त्वेषु फलं वि[5]पच्यमानं पश्यति । तत्कृतमेव तत्कामानां सत्त्वानां परिदीपयति व्यवस्थापयति ॥

---

1 Tib hdod. chogs. dan bral. ba. ma. yin. pa. dan.

2 Acc. Tib literally *manorathānām siddhir na bhavati*.

3 Tib. lit. *karoti* (byed).

4 Tib. illegible. If it is *ādarśa* the Tib word for it is expected to be me. lon,, but the Tib. text does not appear to read so.

5 Tib h'bras. bu.

6 Tib. lit. *kāyena* (tshogs. chen. pos.).

४३ख, Tib. 84b. 2.

स इदं स्याद्वचनीयः। कच्चिदिच्छसि। आदित्यचन्द्रग्रहनक्षत्रतिथि [6]-कृता वा सम्पत्तिविपत्तिर्वा । आहोस्विच्छुभाशुभ[1]कर्मकृतेति। स चेदादित्यादिकृता। तेन पुण्यकर्मणामपुण्यकर्मणां च [7] यावज्जीवमनुवर्तनीया सम्पत्तिर्विपत्तिश्च संदृश्यत इति न युज्यते। सचेच्छुभाशुभकर्मकृता। तेनादित्यादिकृतेति न युज्यते॥

इत्यादित्यादि[Tib. 85b. 1]विहितोऽपि शुभाशुभविहितोऽपि न युज्यते॥ तस्मादेषोऽपि वादोऽयोगविहितः॥

इतीमे षोडश परवादा [2]अभिनिर्हारया[3] परीक्ष्या[4]युक्तयोपपरीक्षिताः[5] सर्वथा न युज्यन्ते॥

[ संक्लेशप्रज्ञप्तिः ]

तत्र संक्लेशप्रज्ञप्तिव्यवस्थानं कतमत्। तत्रिभिः संक्लेशैर्वेदितव्यं। ते[6] पुनः [कतमे][7]। क्लेशसंक्लेशः [3] कर्मसंक्लेशो जन्मसंक्ले[8]शश्च। क्लेशसंक्लेशः कतमः। उद्दानं।

स्वभावश्च प्रभेतेद्श्च हेत्ववस्थामुखैरपि।
गुरुत्वार्थविपर्यासः[4] पर्यायो दोष[9] एव च॥

क्लेशसंक्लेशस्य स्वभावो [ऽपि][10] वेदितव्यः प्रभेदोऽपि। हेतुरपि अवस्थापि। मुखमपि। अधिमात्रतापि। विपर्याससंग्रहोऽपि। पर्यायोऽपि। आदीनवो[11] [5] ऽपि वेदितव्यः॥

---

1 Tib. adds *-aśubha-* once more

2 MS has here -dravya (with a mark of query).

3 For the word see Mahāvyutpatti (ed. Sakaki) 593, 758.

4 MS *parīksya* , Tib brtag pahi. rigs. pa Some of the words of this sentence could not be compared with their Tibetan equivalents as the Xylograph here is very indistinct.

5 Tib. brtags. na , MS *parīksya.*

6 MS *tena* (? *ca*) *punah* Tib. de yan.

7 Tib. gan. že. na

8 Tib omits *-artha-*.

9 Tib. *dosopalambhah* (ñes. dmigs. so.). So below after *ādīnava* there is *upalambhaḥ* compounded with it.

10 Tib. kyan.

11 See note 4.

४४ क, Tib. 85a. 5

क्लेशानां स्वभावः कतमः। यो धर्म उत्पद्यमानः स्वयं चाप्रशान्तलक्षण उत्पद्यते। तस्य चोत्पादप्रशान्त्यैव संस्कारसन्ततिः प्रवर्तते। [6] अयं क्लेशस्य समस्तः स्वभावो वेदितव्यः॥

क्लेशानां प्रभेदः कतमः। स्यादेकविधः क्लेशसंक्लेशार्थेन। स्याद्द्विविधो दर्शनप्रहातव्यो [7] भावप्रहातव्यश्च॥ स्यात्त्रिविधः कामप्रतिसंयुक्तो रूपप्रतिसंयुक्त आरूप्यप्रतिसंयुक्तश्च। स्याच्चतुर्विधः [४४ख] कामप्रतिसंयुक्तो व्याकृतोऽ-Tib. 86a. 1] व्याकृतश्च। रूपप्रतिसंयुक्तोऽव्याकृतः। आरूप्यप्रतिसंयुक्तोऽव्याकृतश्च॥ स्यात्पञ्चविधो दुःखदर्शनप्रहातव्यः समुदय[2]दर्शनप्रहातव्यो निरोधदर्शनप्रहातव्यो मार्गदर्शनप्रहातव्यो भावनादर्शनप्रहातव्यश्च॥ स्यात्षड्विधो रागः प्रतिघो मानोऽविद्या दृष्टि[3]र्विचिकित्सा च॥ स्यात्सप्तविधः सप्तानुशयाः कामरागानुशयः प्रतिघानुशयो भवरागानुशयो मानानुशयो[4]ऽविद्यानुशयो दृष्ट्यनुशयो विचिकित्सानुशयश्च॥ स्यादष्टविधो रागः प्रतिघो मानोऽविद्या विचिकित्सा दृष्टिर्द्वौ च परामर्शौ[1] [5]॥ स्यान्नवविधो नव संयोजनानि। अनुनयसंयोजनं प्रतिघसंयोजनं मानसंयोजनमविद्यासंयोजनं दृष्टिसंयोजनं [6] परामर्शसंयोजनं विचिकित्सासंयोजन मीर्ष्यासंयोजनं मात्सर्यसंयोजनं च॥ स्याद्दशविधः सत्कायदृष्टिरन्तग्राहदृष्टिर्मिथ्या[7]दृष्टिपरामर्शः शीलपरामर्शो रागः प्रतिघो मानोऽविद्या विचिकित्सा च॥ स्यादष्टाविंशत्युत्तरं क्लेशशत[Tib. 86b. 1]मेषामेव दशानां क्लेशानां द्वादशाकारसत्यविप्रतिपत्तिव्यवस्थानतः[3]।

द्वादशाकारं सत्यं कतमत्। कामावचरं दुःखसत्यं समुदय[2]सत्यं। रूपावचरं दुःखसत्यं समुदयसत्यं आरूप्यावचरं दुःखसत्यं॥ कामावचराधिपतित[3]त्परिज्ञाफलं तत्परिज्ञा[प्र]भावितं[3] निरोधसत्यं मार्गसत्यं। रूपावचराधिपतितत्परिज्ञाफलं तत्परिज्ञा[प्र][4]भावितं निरोध[4]सत्यं मार्गसत्यं। आरूप्यावचराधिपतितत्परिज्ञाफल[5] तत्परिज्ञाप्रभावितं निरोधसत्यं मार्गसत्यं॥

---

1 Tib. rab. tu. ma. ži. ba kho na , MS °*prasāntaiva*.

2 They are *dṛṣṭiparāmarśa* and *śīlavrata*'.

3 Tib. bden. pa. rnam. pa. bcu. gñis la. log par. bsgrub par. gžog pa. las.

4 MS *bhāvitaṃ*. 5 rab tu.

४४ क, Tib. 85b. 5

तत्र कामाव[5]चरे दुःखसत्ये समुदयसत्ये कामावचराधिपतेये निरोधसत्ये मार्गसत्ये सर्वे दशक्लेशा विप्रतिपन्नाः । रूपा[6]वचरे दुःखसत्ये समुदयसत्ये तदाधिपतेये निरोधसत्ये मार्गसत्ये प्रतिघवर्जास्त एव दश क्लेशा विप्रति[7]-पन्नाः । यथा रूपावचर एवमारूप्यावचरे ॥

कामावचरप्रतिपक्षे भावनायां षट् क्लेशा विप्रतिपन्ना मिथ्यादृष्टिं दृष्टि-परामर्शं [Tib. 87a. 1] शीलव्रतपरामर्शं विचिकित्सां च स्थापयित्वा ॥

रूपावचरप्रतिपक्षे भावनायां पञ्च क्लेशा विप्रतिपन्ना एभ्य एव षड्भ्यः[2] प्रतिघं स्थापयित्वा ॥

यथा रूपावचरप्रतिप्रक्ष एवमारूप्यावचरप्रतिपक्षे । यथा विप्रतिपन्ना एवमावरण°[2] ॥

तत्र सत्काय[3]दृष्टिः कतमा । असत्पुरुषसेवामागम्यासद्धर्मश्रवणमयो-निशो मनस्कारं नैसर्गिकं[3] वा पुनः स्मृतिसम्प्रमोषं पञ्चोपादानस्कन्धा[4]-नात्मनो वात्मीयतो वा समनुपश्यतो या निर्धारिता क्लिष्टा प्रज्ञा ॥

अन्तग्राह[1]दृष्टिः कतमा । असत्पुरुष[४५क]संसेवामागम्यासद्धर्म[5] श्रवणम-योनिशो मनस्कारं नैसर्गिकं वा पुनस्स्मृतिसम्प्रमोषं पञ्चोपादानस्कन्धानात्मतो गृहीत्वा [5]शाश्वततो वोच्छेदतो वा समनुपश्यतो[6]या निर्धारिता [ऽनिर्धा-रिता][6] वा क्लिष्टा प्रज्ञा ॥

मिथ्यादृष्टिः कतमा । असत्पुरुषसेवामागम्यासद्धर्मश्रवणमयोनिशो[ 7 ] मनस्कारं हेतुं वापवदतः फलं वा क्रियां वा सद्भावं वस्तु नाशयतो[7] या निर्धारितैव क्लिष्टा प्रज्ञा ॥

---

1 Tib. adds here evam (de. bžin. du.).

2 MS °varanaḥ.

3 Tib. raṅ. bžin gyis , MS *naiḥsa°*. and naissa° below

4 Tib mthar. ḥdzin par. MS antaigia.

5 Tib bzuṅ. she. MS. gṛhītā

6 Tib. ma. brtags. MS omits it

7 For *sadbhāvaṃ° nāśayataḥ* MS with a query has *sadbhāva-stu nāśayataḥ* (?) Apparently this reading is defective. Tib. reads here yod. paḥi. dṅos. po. ḥjig pa dṅos. po la., but it is not quite clear to me, nor am I satisfied with the reading suggested above.

४४ ख, Tib. 86b. 4

दृष्टिपरामर्शः कतमः। असत्पुरुष [Tib. 87b. 1]सेवामागम्यासद्धर्मश्रवणमयोनिशो मनस्कारं सत्कायदृष्टिमन्तग्राहदृष्टिं साश्रयां सालम्बनां सनिदानां [2]सहभूसम्प्रयोगां[1] परदृष्टिमुपनिधायाग्रतः श्रेष्ठतो विशिष्टतः परमतश्च समनुपश्यतो या निर्धारितैव क्लिष्टा प्रज्ञा ॥

[3]शीलव्रतपरामर्शः कतमः। असत्पुरुषसंसेवामागम्यासद्धर्मश्रवणमयोनिशो मनस्कारं। यत्तामेव दृष्टिं [4] तद्दृष्ट्यनुचरं शीलं वा व्रतं वा साश्रयं सालम्बनं सनिदानं ससहभूसम्प्रयोगं शुद्धितो मुक्तितो नै[5]र्याणिकतश्च समनुपश्यतो या निर्धारितैव क्लिष्टा प्रज्ञा ॥

रागः कतमः। असत्पुरुषसेवामागम्यासद्धर्मश्रवणमयोनिशो [6]मनस्कारं नैसर्गिकं वा स्मृतिसम्प्रमोषं बहिर्धाध्यात्मं वा निर्धारित[2]मिष्टविषयाद्यवसानं ॥

प्रतिघः कतमः असत्पुरुषसेवामागम्यासद्धर्म[7]श्रवणमयोनिशोमनस्कारं नैसर्गिकं वा स्मृतिसम्प्रमोषं । याध्यात्मं बहिर्धाध्यात्मं वा निर्धारितोऽनिर्धारितो वानिष्टविषयप्रतिघातः।

मानः [Tib. 88a. 1] कतमः। असत्पुरुषसेवामागम्यासद्धर्मश्रवणमयोनिशो मनस्कारं। नैसर्गिकं वा स्मृतिसम्प्रमोषमागम्य[3] [2]याध्यात्मं [बहिर्धा वा][4] निर्धारिताऽनिर्धारिता[5] वा उच्चनीचतायां हीनप्रणीततायां च [चित्तस्य][6] उन्नतिः[7] ॥

अविद्या कतमा। असत्पुरुषं [3] स्मृतिसम्प्रमोषं यज्ज्ञेये वस्तुनि निर्धारितं वानिर्धारितं वा क्लिष्टमज्ञानं ॥

---

1 Tib. lhan cig. hbyun. ba. dan mtshuns (Xylograph wrongly reading hbyun. ba. dan (tshungs) par MS *samahetu samprayogām* (?) See the next paragraph.

2 MS adds here *vā*.

3 Tib. brten. nas. This word in Tib. is found in all the preceding sentences in this connection.

4 Tib. phyi. rol. gyi. ham nang.

5 MS °*rito* in both the words.

6 Tib. sems.

7 Tib. lit. yad unnatam. cittam (mtho. ba. sems pa gan. yin.).

[4] विचिकित्सा कतमा। असत्पुरुषं मनस्कारं या ज्ञेये[1] वस्तु[नि][2] निर्धारितैव[3] [संशय] [4]मतिः[5]।

[5] क्लेशानां हेतुः कतमः। षड् हेतवः। आश्रयतोऽपि क्लेश उत्पद्यते। आलम्बनतोऽपि संसर्गतोऽपि देशनतोऽपि अभ्यासतोऽपि मनसिकारतोऽपि ॥[6]

तत्राश्रय[तो][7] [6]योऽनुशयादुत्पद्यते[8]। तत्रालम्बनतो यः क्लेशस्थानीये विषय आभासगतः[9]। तत्र संसर्गतो योऽसत्पुरुषाणामनुशिक्षमाणस्य। तत्र देशनतो [४५ख] [7] योऽसद्धर्मश्रवणतः। तत्राभ्यासतो यः पूर्वसंस्तववला-धानतः।[10] तत्र मनसिकारतो योऽयोनिशो मनसि कुर्वत उत्पद्यते[11] ॥

कति क्लेशा[Tib. 88b 1]वस्थाः। समासतः सप्त। अनुशयावस्था पर्यवस्थानावस्था परिकल्पितावस्था सहजावस्था [2] मृद्वस्था मध्यावस्थाधि-मात्रावस्था ॥

तत्र द्वाभ्यां कारणाभ्यां क्लेशानुशयोऽनुशेते। बीजानुबन्धतस्तदधिपति-वस्तुतश्च ॥[12]

[3]कतिभिर्मुखैः क्लेशः[सं][13]क्लेशयति। समासतो द्वाभ्यां। पर्यवस्थानमुखे-नानुशयमुखेन च।

---

1 MS *yaj* 2 Tib. dnos po. la See below.

3 Tib. brtags. pa. la, kho. nahi; MS *anirdhāritaiva.*

4 Tib. yid. gñis.

5 For this word we expect in Tib. such words as blo. or blo. gros but Xylograph appears to read bra. ba.

6 So below *manasikāra* for *manaskāra* as before.

7 MS *tatrāśrayaḥ katamaḥ* not supported by Tib.

8 Tib. bag. la. ñal ba. las. skye ba. gan. yin, paho. ; MS yo *'nuśaya utpadyate*

9 MS *ābhāsagate.* for *gate.* Tib would suggest *-bhūtaḥ* (gyur. pa ). It is not clear.

10 Tib. *-balotpāditaḥ* or *balajanitah* (stobs. bskyed).

11 In this paragraph the reading according to Tib. should be *aśrayah, alambanam, samsargaḥ,* etc put in the nominative case and not in the ablative case as in the MS. The case is exactly the same with the readings below: Tib. 89a. 2

12 For *tada° taśca°* Tib. dehi bdag. pohi. dno (?)s. pos. so. MS *tadhimatimastu (?) gatisamstutiśca.* 13 Tib. kun. nas.

४५क, Tib. 88a. 4

कथं पर्यवस्थानमुखेन। [पञ्चभिः प्रकारैः।][1][4] [अ]प्रशान्त[2]विहारतः कुशलान्तरायतः। आपायिकदुश्चरितसमुत्थापनतो दृष्टधार्मिक जातिपरिग्रहतो जात्यादिदुःखनिर्वर्तनतश्च[3]॥

[5]कथमनुशयमुखेन संक्लेशयति। पर्यवस्थानसन्निश्रय[4]दानतो जात्यादिदुःखनिर्वर्तनतश्च॥

अपि खलु सप्तभिर्मुखैः सर्वक्लेशा दर्शन[6]भावना[5]विबन्धकरा आवरणभूता वेदितव्याः। तद्यथा मिथ्यावगमनतः अनवगमनतः अवगमानवगमनतः[6] मिथ्यावगम[7]प्रतिपत्तितः तन्निदानपदस्थानतः[8] तदुत्त्राससं[9]जननतः निसर्गसमुदाचारतश्च॥

कथं क्लेशोऽधिमात्रलक्षणस्तीव्रलक्षणो गुरुक[Tib. 89a. 1]लक्षणो वेदितव्यः। समासतः षड्विधाकारैरापत्तित उपपत्तितः[10] सन्तानतो वस्तुतः[11] [12]कर्मसमुत्थानतः पर्यन्ततश्च।

तत्रापत्तितो येन क्लेशपर्यवस्थानेन [2] निरवशेषामापत्तिमापद्यते। तत्रोपपत्तितो यः कामावचर आपायिको वा। तत्र सन्तानतो यो रागादिचरितानां परिपक्वेन्द्रियाणां यूना[3]मपरिनिर्वाणकधर्माणां च। तत्र वस्तुतो

---

1 Tib. rnam. pa. lnas.

2 Tib. rab. tu. ma. źi. bar. gnas pa dan.

3 Tib. hgrub. pas so. MS *nivartta*° for *nirvartta*°.

4 Tib. rten,

5 Acc to Tib. the compound here is of *darśana* and *bhāvanā*.

6 Tib rtogs pa yan ma yin ma. rtogs. pa. yan. ma. yin. pa. dan. This suggests *nānavagama nānavagamanataḥ*,

7 Tib. adds here *mithyā* again reading the word thus: log. par. rtogs. pas. log. par sgrub. pa dan It suggests *mithyāvagamana mithyāpratipatti (taḥ)*.

8 For *sthāna* Tib has here rten. generally in the sense of *āśraya*.

9 Tib. omits *saṃ*.

10 In such cases *upapatti* is nothing but *utpatti*.

11 Acc. to Tib. in the sense of *ādhāra* (gži )

12 MS adds here *ku-* before *karma-* not supported either by Tib. or by the following paragraph.

४५ ख, Tib. 88b. 2

यो गुरुक्षेत्रालम्बनतो गुणक्षेत्रालम्बनतोऽगम्य[1]क्षेत्रालम्बनतश्च । [4] तत्र कर्मसमुत्थानतो येन क्लेशपर्यवस्थानेनाभिभूतः पर्याप्तः कायवाक्कर्म समुत्थापयति । तत्र पर्यन्ततो[5] यः स्वभावेनैवाधिमात्रप्रकारसंगृहीतः । तत्र प्रथमतो मृदुना प्रतिपक्षेण प्रहीयते ।

[विपर्यासः]

सप्तेमे विपर्यासाः । तद्यथा । संज्ञाविपर्यासो दृष्टिविपर्यासश्चित्तविपर्यासो[2]ऽनित्येऽनित्यमिति विप[6]र्यासो दुःखे सुखमितिविपर्यासोऽशुचौ शुचीति विपर्यासोऽनात्मन्यात्मेतिविपर्यासः ।

संज्ञाविपर्यासः कतमः । योऽनित्ये नित्यमिति [7] दुःखे सुखमिति अशुचौ शुचीति अनात्मन्यात्मेति संज्ञापरिकल्पः ॥

दृष्टिविपर्यासः कतमः । य[3]स्तत्रैव तथा संज्ञापरिकल्पिते [Tib 89b 1] क्षान्ती रुचिर्व्यवस्थापनाभिनिवेशः ॥

चित्तविपर्यासः कतमः । यस्तत्रैव तथाभिनिविष्टे रागादिसंक्लेशः ॥

[2] तत्र क्लेशास्त्रिभिराकारैर्वेदितव्याः । अस्ति क्लेशो विपर्यासमूलः । अस्ति विपर्यासः । अस्ति विपर्यासनिष्यन्दः ॥

[४६क] तत्र विपर्यासमूलमविद्या । [3] विपर्यास[४६ख]निष्यन्दः सत्कायदृष्टिरन्तग्राहकदृष्टेरेकदेशो दृष्टिपरामर्शः शीलव्रतपरामर्शो रागश्च । विपर्यासनिष्यन्दो मिथ्या[4] दृष्टिरन्तग्राहदृष्टेरेकदेशः प्रतिघो मानो विचिकित्सा च ॥

तत्र सत्कायदृष्टिरनात्मन्यात्मेति विपर्यासः । अन्तग्राहदृष्टेरेकदेशोऽनित्ये [5] नित्यमिति विपर्यासः । दृष्टिपरामर्शोऽशुचौ शुचीति परामर्शः । शीलव्रतपरामर्शो दुःखे सुखमिति विपर्यासः राग[6] उभयथा अप्यशुचौ शुचीति विपर्यासः । अपि दुःखे सुखमिति विपर्यासः ॥

[पर्यायः]

क्लेशानां पर्यायः कतमः । बहवः पर्यायाः । तद्यथा । संयोजनानि

---

1 Tib. lit *apraveśya*. (hjug., par. bya. ma. yin pahi). [for *agamya*-. MS *āgamya*

2 MS reads it before *dṛṣṭi*° but Tib and the following order do not support it

3 MS *yat* for *yas*. So in the next sentence

४६क, Tib. 88a. 3

वन्धनान्यनुशया उपक्लेशाः पर्यवस्थानानि[1] ओघा उपादाना[नि][2] ग्रन्था नीवरणानि[3] [Tib. 90a. 1] खिला मला निघ्रा[:][1] शल्या[नि] किञ्चना[5](?) मूला[नि] दुश्चरितान्यास्रवा[6] विघाताः परि[2]दाहा उपायासा रणा[7] अग्नयो-ज्वरा वनस्था[8] विनिबन्धाश्चेत्येवंभागीयाः क्लेशपर्यायाः ॥

तत्र दुःख[3]संयोजनात्संयोजनानि। कुशलचर्यायामकाम[9]कारित्वाद्बन्धनानि। सर्वलौकिकोत्कर्षबीजानुगम्य[10]त्वादनुशयाः। विपर्यासै[4]श्चित्तोपक्लेशकत्वादुपक्लेशाः। अभीक्ष्णं समुदाचारित्वा[11]त्पर्यवस्थानानि।

---

1 In Tib first *paryava°* then *upakle°*, and *paryapasthānāni* (kun. nas. dkris. pa. rnams ) for *paryavasthānāni.°* Acc to Tib. the literal sense of *paryavasthāna* is 'standing round' which signifies 'hindrance'.

2 Tib. ñe. bar len pa. rnams As regards the gender the MS. in this and the following two paragraphs in this connection is very indifferent putting the same word in some cases in the masculine gender and in others in the neuter gender.

3 MS throughout in this connection *nivara°*.

4 Tib sdig. pa. rnams. It is in fact in sense *ogha*.

5 So in the following paragraphs. Tib. suggests nothing of the kind reading simply yons hdzin '*parigraha*'. Cf. *upadhi-parigraha-kārakatvāt* in the next paragraph

6 MS adds *ca* between *duscaritāni* and *āsravāh*.

7 Tib. hthab. pa. rnams, but genruntly for *rana* we have ñon. mons

8 For this word the MS throughout has *vanasāh*, while in the corresponding sentence in Tib. we have nags sbyor. rnams. suggesting *vanayogāh*. The word *vana* in Buddhism is sometime for *tṛṣṇā* 'lust'.

9 Tib. suggests *sakala* (dgur) before *kāma*.

10 For *bījānugamatvāt* Tib. *bījavattvāt* (sa. bon. dan. ldan. pas.)

11 The Tib. phrase here kun. tu. hbyum. bas. can hardly be taken for *samudācāritvāt* it may mean *samudbhavāt*.

४द्ख, Tib. 79b. 6

दुर्गाधत्वादनुस्रोतो[1] महारित्वा (?)[2]च्च [5] ओघाः। मिथ्याप्रतिपत्त्युपायवात्द्योगाः। आत्मभावप्रबन्धोपादायकत्वादुपादानानि। दुर्मोचकत्वाद् ग्रन्थाः। तत्त्वार्था[3]वच्छादकत्वा [ 6 ]न्नीवरणानि। कुशलपुष्पा[4]क्षेत्रभूतत्वात्खिलाः। स्वभावसंक्लिष्टत्वान्मलाः। नित्यघातत्वान्निघाः[5]। अप्रशान्तलक्षणत्वा[7] द्दूरान्तर्गतत्वाच्च[6] शल्यानि[7] उपधिपरिग्रहकारकत्वात्किञ्चनाः(?)[8]। अकुशलाश्रयभूतत्वान्मूलानि। मिथ्याप्रतिपत्तिस्वभावत्वाद्दुश्चरितानि। चित्त [Tib. 90b. 1] विक्षेपकत्वादास्रवाः। भोगैरतृप्तिकारकत्वाद्विघाताः। इच्छाविघातकारकत्वात्परिदाहाः। विपत्त्याहारकत्वादुपायासाः। कलहभण्डन[ 2 ] विग्रहविवादहेतुभूतत्वाद् रणाः। उपचितोपचितस्य कुशलमूल[9]फलेन्धनस्य दाहकत्वादग्नयः। महाव्याधिभूतत्वाज्ज्वराः। विचित्राभाव[3]वृक्षसंसाधकत्वा[10]द्वनथाः। कामगुणसक्तिकत्वाल्लोकोत्तरधर्मप्रत्यन्तरायकत्वाद्विनिबन्धाः।

एते सर्वक्लेशानां पर्यायाः। [4] प्राधान्यात्तु भगवता तस्मिंस्तस्मिन्स्पर्याये ते [ते][11] क्लेशाः स्थापिताः॥

संयोजनानीति नव संयोजनानि। अनुनयसंयोजनं[12] विस्तरेण पूर्ववत्॥

बन्धनानीति [5] त्रीणि बन्धनानि रागद्वेषमोहाः॥

---

1 In Tib. *anusrotaḥ* is generally ḥbab. phyogs. su, but here we have rgyun. phyogs. su

2 This is as reads the MS. It is very difficult to make out any sense from it, nor does the Tib. help much reading rgyan. phyogs su.khyad. pas. byed. pas. na. This for *mahāritvāt* may suggest *viśesahāritvād*.

3 Tib. de. kho. naḥi. don. MS *tathātvārthā°*

4 In Tib read me tog for le log.

5 MS singular number, Tib. plural.

6 Tib. lit. *durangamatvāt* (rin. du. son. bas.)

7 MS *śalyāḥ*

8 See above. See the preceding paragraph with note.

9 Tib. omits *-phala*.

10 Tib. sgrub. par. byed. pa. na, MS *saṃhārakatvāt*.

11 Tib de. dan da. dag.

12 MS *saṃyojana* for ° °*saṃyojanam* vi°

अनुशया इति सप्तानुशयाः। कामरागानुशयो विस्तरेण पूर्ववत्॥

उप[6]क्लेशा इति त्रय उपक्लेशा रागद्वेषमोहाः॥

[1]पर्यवस्थानानीत्यष्टौ पर्यवस्थानानि। आह्रीक्यमनपत्राप्यं स्त्यान[7]मिद्ध-मौद्धत्यं कौकृत्यमीर्ष्या मात्सर्यं॥

ओघा इति चत्वार ओघाः कामौघो भवौघो दृष्ट्योघोऽविद्यौघः॥

यथौघा एवं [Tib. 91a. 1]योगाः॥

उपादानानीति चत्वार्युपादानानि। (४६ख) कामोपादानं दृष्ट्युपादानं शीलव्रतोपादानं [2] [आत्मवादोपादानं][2]॥

ग्रन्था इति चत्वारो ग्रन्थाः। अभिध्याकायग्रन्थो व्यापादशीलव्रत-परामर्श[3][3]सत्याभिनिवेशकायग्रन्थाः॥

नीवरणानीति पञ्च नीवरणानि। कामच्छन्दनीवरणं। व्यापादस्त्यान-मिद्धौद्धत्यकौकृत्यविचिकित्सानीवरणानि[4]॥

खिलानीति [4] त्रीणि खिलानि रागद्वेषमोहाः॥

यथा खिलान्येवं मला निघा[नि] शल्या[नि] किञ्चन [5]दुश्चरितानि च॥

[5]मूलानीति त्रीणि मूलानि। लोभोऽकुशलमूलं। द्वेषो मोहोऽकुशलमूलं॥

आस्रवा इति त्रय आस्रवाः। कामास्रवो भवास्रवोऽविद्यास्रवः॥

विघाता इति त्रयो विघाता रागद्वेषमोहाः॥

[6]यथा विघाता[6] एवं परिदाहा उपायासा रणा अग्नयो [7] ज्वरा वनथाः।

विनिवन्धा इति पञ्च विनिवन्धा कायापेक्षा कामापेक्षा [7]संसृष्टविहारिता आनुलोमिककथावैकल्यं अल्पावर[8][Tib 91b. 1] मात्रसन्तुष्टिश्च॥[9]

---

1 See AK. V. 34

2 It is omitted in MS and the Tib is extremely illegible Kathāvatthu, XV 2, Vibhanga, 145, Nettipakarana, 41, Samyutta, ii. 3, Dīgha, ii 58, Majjhima, i. 66, AK iii 86, v 76.

3 MS °*marśeti*, Tib before *satya* (bden) appears to read hdi. ni. not clear, if it is really so, it suggests *idam*, *idam satyābhi*°.

4 MS sing. number.

5 For these words see the Dictionary of the P. T S.

6 For the five *vinibandhas* of *citta* see Dīgha, iii, 238; Majhima. i. 103, 7 The text is not clear here, 8 MS singular number.

9 The word *avara* in the MS could not be ascertained from Tib. as it is very illegible here.

क्लेशानामादीनवः कतमः। अनेकाकार आदीनवो वेदितव्यः। तद्यथा क्लेश उत्पद्यमान आदित एव चित्तं संक्लेशयति आलम्बने [2] विपर्यासं करोति। नैष्यन्दिकीं संस्कारसन्ततिं प्रवर्तयति। आत्मव्याबाधाय संवर्तते।[1] परव्याबाधाय उभयव्याबाधाय। दृष्टधर्मिकमवद्यं प्रसवति साम्परायिकं[2] [3] तज्जं चैतसिकं दुःखदौर्मनस्यं[3] प्रतिसंवेदयते। जन्मादिकं दुःखं निर्वर्तयति। निर्वाणाद्दूरीकरोति। [4] सन्ततिं[4] कुशलेभ्यो धर्मेभ्यः परिहापयति। भोगज्यानिं निगच्छति। मङ्कु[5]रनुदग्रोऽविशारदः पर्षदमुपसंक्रामति। दिग्विदिक्षु [5] पापकोऽवर्णकीर्त्तिश्लोको निश्चरति। गर्ह्यो भवति सतां। विप्रतिसारी कालं करोति। कायस्य च भेदादपायदुर्गति [6] विनिपातनरकेषूपपद्यते स्वकं चार्थं नाप्नोति॥

## [ कर्मसंक्लेशः ]

कर्मसंक्लेशः कतमः। उद्दानं।

स्वभावश्च प्रभेदश्च हेत्ववस्थामुखैरपि।
गुरुताथ विपर्यासः पर्यायो दोष एव च॥

[7] कर्मणां स्वभावोऽपि वेदितव्यः प्रभेदोऽपि हेतुरप्यवस्थापि मुखमप्यधिमात्रतापि विपर्यासोऽपि पर्यायोप्यादीनवो[6]ऽपि वेदितव्यः॥

कर्मस्वभावः कतमः। [Tib. 92a. 1] यो धर्म उत्पद्यमानो अभिसंस्कारलक्षणश्चोत्पद्यते तस्य चोत्पादात्कायाभिसंस्कारो वागभिसंस्कारस्तदुत्तरकालं प्रवर्तते। अयमुच्यते कर्म [2] स्वभावः॥

कर्मप्रभेदः कतमः। द्वाभ्यामाकाराभ्यां द्रष्टव्यः। पुद्गललक्षणप्रभेदतः। धर्म[7]लक्षणप्रभेदतश्च। ते पुनरकुशलाः कुशलाश्च दश कर्मपथाः।

---

1 Tib generally *bhavati* (hgyur. ba.)

2 Acc to Tib. *ca ubhayam* is to be added here (dan. gñis ga.). After this MS adds here *drstadharmasāmparāyikam* not in Tib.

3 Acc to Tib. it means *duhkham* and *daurmanasyam* as there is put between them *ca* (dan).

4 Not in Tib.

5 Certainly it is for the Vedic and Pali *manku*, the former meaning 'vacillating' and the latter 'staggering' 'confused'.

6 Acc. to Tib with *upalambhah* (dmigs) compounded with it as a second member

7 Tib. chos. See below. MS *karma*.

प्राणाति[3]पातः प्राणातिपातविरतिश्च। अदत्तादानमदत्तादानविरतिश्च। काममिथ्याचारः काममिथ्याचारविरतिश्च। मृषावादो मृषावादविरतिश्च। पैशुन्यं [4] पैशुन्यविरतिश्च। पारुष्यं पारुष्यविरतिश्च। संभिन्नप्रलापः संभिन्नप्रलापविरतिश्च। अभिध्याभिध्याविरतिश्च। व्यापादो व्यापादविरतिश्च। मिथ्या[5]दृष्टिर्मिथ्यादृष्टिविरतिश्च॥

[४७क] तत्र पुद्गललक्षणव्यवस्थानं यथोक्तं यथा प्राणातिपातिकः खलु भवति[1] विस्तरेण यथासूत्रं ]'तत्र][2] प्राणातिपातिकः खलु भवती[6]त्युद्देशपदमिदं। रौद्रो[3] वधहिंसा[4]चित्तप्रत्युपस्थानात्। रुधिरपाणि[5]स्तद्वधसम्पादनात्कायविकारापत्तेः। हतप्रहत[6]निविष्टो[7] [7] जीविताद् व्यवरोप्याङ्गशो विभज्याजीवकल्पनात्। [8]अलज्जात्मनोऽवद्योत्पादनात्[9]। अकृपापन्न[10] परेषामनिष्टोप[Tib 92b. 1]-संहारमुपादाय॥[11]

सन्ति निर्ग्रन्था नाम प्रव्रजिताः। त एवमाहुः। योजनशतस्यार्वाग्ये प्राणिनस्तेभ्यः[12] संवृता वा भवन्त्यसंवृता वेति।[13] तत्प्रतिपक्षेण सर्वसत्त्वेष्वि-

---

1 While Tib. always adds *iti* (žes or žes bya. ba) MS omits it in all such cases here and below

2 Tib de. la

3 Tib. adds *iti* (žes bya ba).

4 Tib. *vihiṃsā* (rnam par. htshe bahi)

5 Tib. adds *iti* (žes bya. ba.)

6 Tib. bsad. pa. dan gsod pa.

7 Tib. adds *iti* (žes. bya. ba )

8 Tib. adds *iti* (žes. bya ba )

9 Tib kha. na. mtho ba. bskyed pahi phyir. MS *'vadyaprasavam upādāya.*

10 Tib adds *iti* (žes. bya. ba). MS *atrapāpanna* for *akṛpāpanna.*

11 For *upasaṃhāram upādāya* Tib. *sampādanāt* (bsgrub. pahi phyir)

12 Acc. to Tib. *tebhyaḥ* (de. dag gyi. phyir.) is to be taken in the fourth case-ending in the sense of 'for them'

13 Tib. bsdams. pa mi. bsdams. pa yin žes. Here *vā* is omitted. MS *saṃvṛtā vā bhavaty asaṃvṛta veti*

४६ ख, Tib. 92a. 2

त्याहुः।[1] त एव पुन[2]रेवमाहुर्यथा वृक्षादयो बाह्यभावाः प्राणिभूता इति। तत्प्रतिपक्षेणाहुः[2] प्राणिभूतेष्विति। इति[3][3] सत्पुण्यविरतिप्रतिपक्षश्च ख्यापितो भवति असत्पुण्यविरतिप्र[4]तिपक्षश्च ख्यापितो भवति ॥[5]

एभिर्यथानिर्दिष्टैः पदैरभिसंस्कारवधः[6] परिदीपितोऽन्ततः[7] पिपीलकमपि प्राणिनमुपादाय। तेन पदेन[4]ापरिहार[8]वधः[9] परिदीपितो भवति ॥

प्राणातिपातादप्रतिविरतो भवतीति। सति प्रत्यये व्युत्थानावकाशः परिदीपितो [10]यावदविरतस्तावत् प्राणातिपातिक इति [5]समासार्थः ॥

पुनः सर्वैरेभिः पदैः प्राणातिपातिकं लिङ्गं प्राणातिपातक्रिया प्राणातिपातनिदानं प्राणातिपातवस्तुक्रियाप्रभेदश्च परिदीपितो भवति ॥

अपरः समासार्थः। [6] प्राणातिपातं कुर्वन्यथाभूतो भवति। यथा च प्राणिनं घातयति। यच्च प्राणिनं घातयतः प्राणातिपातिकत्वमस्य भवति तदेतत्परिदीपितमिति। प्राणातिपातिकपुद्गललक्षणं चैतत्परिदीपितं [7] न प्राणातिपातलक्षणं ॥

अदत्तादायिकः खलु भवतीत्युद्देशपदं। अपरेषामिति परपरिगृहीतं धनधान्यादि वस्तु[11]। तदेव यद्ग्रामे [Tib. 93a 1][1]स्थापितं सञ्चारितं वारण्यगत [12]वेति। यदरण्ये जातं वा संक्षिप्तं वा सञ्चारितं वा तदेव स्तेयसंख्यातमिति। [४७ख]। यददत्तमत्यक्त[2]ममुक्तमाददानोति स्वीकरोति। अदत्तादायो[13]

---

1 So the Tib gñen por. sems. can. thams. cad. la. źes. ıgsuns MS *āha* for *āhuḥ*. 2 MS *āha* for *āhuh*

3 Tib. lit. *evam* (de. ltar. na.)

4 In the Xylograph read spon. ba. for sprod pa.

5 The meaning of this paragraph is obscure to me.

6 Acc. to Tib this compound word is to be explained as *abhisaṃskārena vādaḥ* (mnon. par. hdu byed. pas. gsod pa.) MS *vacaḥ* for °*vadah*.

7 Here MS adds *kutra* of which there is nothing in Tib.

8 ? Tib. bsrun bar. dkah. ba. lit. meaning *krcchra-rakṣana*.

9 Tib. gsod. , MS *vacaḥ*. 10 So Tib. MS *parikīrttito*.

11 MS adds here *grāma-nagaram ceti* not in Tib.

12 Tib. dgon. pa. na. yod. pa MS *aranyāgatam*.

13 Tib adds *iti* (źes. bya. ba.).

कदाचिदुप[1]करणवैकल्येन स्वीकरणतः[2]। अदत्तरत इति तच्चौर्यकर्म [3] समादाय वर्तनतः। अदत्तात्यक्तामुक्तप्रतिकाङ्क्षीति पराहृतस्वीकरणाभिलाषतः[3]। तत्र यद्दायकेन स्वामिना न पूर्वं दत्तं दानयोगेन[4] तददत्तमित्युच्यते। यत्स्वामिना [4] प्रतिग्राहकं प्रत्यपरित्यक्तं तदत्यक्तमित्युच्यते। यत्स्वामिनैव सर्वजनतां[5] प्रति यथाकामोपादानपरिभोगायानिसृष्टं [5] तदमुक्तमित्युच्यते। स्तेन[6]-श्चात्मानं परिहरति [7]अदत्तादायितयादत्तरततया च। लोलुपं परिहरति[8] अदत्तात्यक्तामुक्तप्रतिकाङ्क्षणतया [6] अशुद्धं परिहरति।[9] अधिकरणपराजयाशुद्धतया। अशुचिं परिहरति अपराजितस्यापि तद्दोषमलिनतया। सावद्यं परिहरति [7]' दृष्टधर्मसाम्परायिकानिष्टफलहेतुपरिग्रहतया। अदत्तादानात्प्रतिविरतो भवतीति प्राणातिपातवदस्यापि विभागो द्रष्टव्यः। तदन्येषु च कर्मपथेषु[10] समासार्थः॥

[Tib. 93b 1 पुनर्यतः][11] अदत्तादायी भवति यत्रस्थं यथाभूतोपायोऽपहरन्[12] ततश्चापहाराद्यं [13]दोषमवाप्नोत्ययं पिण्डार्थः॥

इदमप्यदत्तादायिकलक्षणं [2] नादत्तादानलक्षणं वेदितव्यं। तथा परिशिष्टेष्वपि॥

काममिथ्याचारिकः खलु भवतीत्युद्देशपदं। यास्ता मातापितादिरक्षिता इति।

---

1 Xylograph illegible hence it could not be ascertained.

2 Tib. simply *svīkaroti* (bdag. gis. byed. paho). So in the following sentences. 3 MS °*lāṣitaḥ*

4 Tib. sbyin. pahi. tshul gyis. MS adds *-grahaṇa-* between the words *dāna* and *yojana*.

5 Tib. skye. ba. thams. cad. la. (lit. *sarvajanam prati*). MS *janyatām prati* 6 Tib. rku ba.

7 Tib. yoṅs. su sbyed. lit. 'conceals' It adds here *iti* (žes. bya ba) So below. 8 Tib. adds *evam*

9 Here both in MS and Xylograph the word is illegible.

10 Tib. adds *evam*.

11 Here the Xylograph and the MS are illegible.

12 Tib. thabs. ji. ltar. rku. ba. dan, MS *yathāyathābhūtopahāram*

13 As it is in the MS. It is to be noted that the reading here in two lines is not satisfactory being doubtful.

४७ख, Tib. 93a. 2

[3] यथापि तन्मातापितरौ[1] स्वां दुहितरं पतिपरिणयननिमित्तं तदन्येन सह मैथुनतो[2] गोपयति रक्षति कालेन कालमवलोकयति। उपरते वा पुनस्तस्मिन् सम्बन्धेन भ्रात्रा वा भगिन्या वा रक्षिता भवति। [4] तस्मिन्वासति ज्ञातिरक्षिता भवति। तस्मिन्नसति स्वयमेव कुलेऽप्रतिरूपमेतदिति विदित्वा स्व[य]मात्मानं रक्षति। श्वश्रूश्वशुराभ्यां वा रक्षिता भवति स्वपुत्रनिमित्तं। [3]सदण्डा। [5] राजयुक्तकुलदण्डानीति रक्षितत्वात्। सावरणा द्वारपालरक्षितत्वात्। सा खल्वेषा परिणीतायास्त्रिविधारक्षा परिदीपिता भवति समासतः। गुरुस्निग्धजनावलोकनारक्षा[4] [6] राजयुक्तकुलारक्षा द्वारपालारक्षा[5] च॥

परभार्या भवति। सैव परिणीता[6] परपरिगृहीता। सैवापरिणीताप्यरक्षिता। [7] त्रिभिररक्षैतद्रूपासु।[7] सहसेति। भ्रान्तिं जनयित्वा। बलेनेति पश्यतां सर्वेषां मातापित्रादीनां प्रसह्यानिच्छन्तीमनुस्कन्द्येति। [Tib. 94a. 1] [आक्रमणेनेति] अनिच्छन्तीमपश्यतां चोरयन्ति॥][8]

कामेषु चारित्रमापद्यत इति द्वयद्वयसमापत्तिरिह कामोऽभिप्रेतः। मिथ्याचारित्रमापद्यत इति [2] अनङ्गादेशाकालेषु (?)[9] ये स्वस्यामपि भार्यायां सावद्या भवन्ति [इति] समासार्थः॥

पुनर्यां गच्छतो यथागच्छतः काममिथ्याचारो भवति तदेतत्परि[3]दीपितं॥

---

1 MS *mātāpitaram*. But according to the following verb it should be changed.

2 MS *maithuno*. Tib. hkhrig pa. las

3 Here the text from *sadaṇḍā* to *sāvaraṇā* is not quite clear both in Sanskrit and Tibetan

4 In Tib. *avalokana* is omitted adding *svayamrakṣā*

5 MS *rakṣā* for *ārakṣā*

6 Tib dgar bahs ; read for it hdor baho. (?)

7 For *arakṣā* (Tib ma. bsruns pa) MS *ārakṣā*

8 Tib. nan. gyis. žes bya. ba ni. mi. hdod. bźin. du de. dag. gis. mi. mthon bar rku. baho MS *apaśyatām cauryenecchantīm*.

9 See p 181, l 12

४७ ख, Tib. 93b. 3

मृषावादिकः खलु भवतीत्युद्देशपदं ।[1] अपृथच्छेण्यः[2] परिग्रद् (?) तासां समवाय[4]श्चातुर्दिशस्य जनकायस्य[3] त्रिभिर्व्यवहारैरनुभूतं यत्तज्ज्ञानं। दृष्टेनानुभूतं दृष्टमेव[4]। आत्महेतोरिति भयहेतोर्वामिषकिञ्चित्कहेतोर्वा। [5] यथात्महेतोरेवं परहेतो[.][1] रुभय[5]हेतो । [ भयहेतोरिति ][6] वधबन्धनज्यानिगर्हणादिभयात्। आमिषकिञ्चित्कहेतोरिति [४८क] [6] धनधान्यहिरण्यादिनिमित्त' मृषावाच' भाषत इति विनिधाय रुचिं दृष्टिं भाषणात्। समासार्थः पुनरधिकरणतोऽन्यथा भापणतो निदानतः संज्ञाविवादतश्च [7] मृषावादो वेदितव्यः॥

पैशुनिक खलु भवतीत्युद्देशपदं भेदाभिप्रायत्वाद्विभेदकः। एषां श्रुत्वा तेषामारोचयति। तेषां वा श्रुत्वैषामारोचयतीति। [Tib. 94b. 1] यथाश्रुत[7]भेदानुकूलं वचनं। समग्राणां भेत्ता[8] भवति विप्रीतिसंजननतया। भिन्नानां चानुप्रदानात्[9] प्रीतिः सम्भवति। [2][1] गोपनतया[10] व्यग्रा[11]रामो भवति विप्रीतिसंजनने क्लिष्टचित्ततया। व्यग्ररतः प्रीतिसम्भव-

---

1 Here the following text as in the MS is extremely corrupt. Tib. too, is not of much help, nor is it here quite legible. The text referred to reads *rājakule vāyuktakule vā rājarājakulam taddhikrto yuktakulam*. Most of the words of this Skt text are wanting in Tib. which appear to run as follows rgyal pohi. pho bran hkhor ces. bya ni rgyal po. hos ( ? *rājakulam iti rājayogyam*), bskos. pa. žes. bya ba ni (*yuktam iti* ? ) la gtogs paho

2 It is obscure.

3 Tib. de. dag gi.

4 Acc to Tib lit *drstam iti darśanenaivānubhūtam* (mthon ba. žes. bya. ba. ni. mthon ba. kho nas. myon. baho)

5 Tib reading hjigs. pahi. phyir shows the reading *bhaya-* But the next word *bhaya* in [*bhayahetor*] is in Tib. *ubhaya* (gñi gahi.)

6 Also MS has *a bhaya*

7 Tib. ji. skad. thos. paho. MS °*kulyam*.

8 In the Xylograph read dbye. bar. for hbyed. par.

9 MS *pradānām*, Tib bye. ba. rnams. mi. hdum. par. byed. ces bya . ba ni. meaning *bhinnam bhedakaranam iti*

10 Tib. not clear, hence the reading could not be ascertained from this source. See after a line *pratisambhava vilopane*.

11 The word *vyagra*, Tib. mi. mthun pa, or mi. hdum pa is an opposite term of *samagra*. Tib. mthun. pa.

४७ख, Tib. 94a. 3

विलोपने (?) क्लिष्टचित्ततया व्यग्रकरणीं वाचं भाषतेऽश्रुत्वा वा [3] परप्रयोजनतया वा। समासार्थः पुनर्भेदाभिप्रायता अभिन्नभेदप्रयोगता भिन्नभेदप्रयोगता भेदक्लिष्टचित्तता परप्रयोजनता च परिदीपिता भवति ॥

[4] पारुषिक॰ खलु भवतीत्युद्देशपदं। तत्र शीलाङ्गपरिगृहीतत्वाद् वाङ् नेले[1]त्युच्यते। मधुरश्लक्ष्णपदव्यञ्जनत्वात्कर्णसुखा। अध्याशयप्रयोजितत्वाद् [5] अकृत्रिमत्वादशाठ्योपहतत्वाद् हृदयङ्गमेत्युच्यते। असमारोपितत्वात् कालमात्रार्थोपसंहितात्वाच्च प्रेमणी। निर्वाणपुराधिकृतत्वा[6]पौरी[2]। मधुरपदव्यञ्जनत्वाद्वल्गुः। सुनिरुक्तपदव्यञ्जनत्वाद्विस्पष्टा। गमकत्वाद्विज्ञेया। धर्म्यत्वाच्छ्रवणीया। [7] निरामिषचित्तत्वादनिश्रिता। परिमितत्वा[3]दप्रतिकूला। प्रबद्धत्वाद्विशदत्वाच्चापर्यादत्ता[4] ॥

सा खल्वेषा नेलामुपादाय यावदपर्यादत्तान्ता[5] त्रिविधा वेदितव्या। [Tib. 95a. 1] शीलसंवरसंगृहीतैकेनाकारेण संमोदिका। पश्चिमा पुनरधिकारसम्पन्ना प्रथमाकारेण। द्वाभ्यां [2]व्यञ्जनसम्पन्ना। परिशिष्टैः प्रयोगसम्पन्ना वेदितव्या। अनागतमध्वानमुपादायाभिप्रेतत्वात्कान्ता। [अतीत-

---

1 Clearly here and below the word is *nelā*, for which in both the places Tib. is mi. gyo ba. meaning lit. *niścalā* '*unmoving*' i.e, 'firm' 'true'. In Skt. *ilā* means 'flow' and 'speech', so it may be that acc to Tib. *nelā* (*na ilā*) is lit. that speech which does not move, *i. e.* is firm, true. In Pali, however, the word nela is well-known and used frequently and specially with reference to speech. It is from Sanskrit *na-enas* 'fault', 'sin', i.e 'faultless', 'sinless' with reference to speech. Buddhaghosa explains elam vuccati doso n'assā (*i. e* vācāya) 'ti nelā niddosā. It is therefore quite clear that the word *nelā* used here in our text is nothing but neḷā in Pali meaning 'faultless' See the Pali Dictionary.

2 Tib pho. bran hkhor bahi skad. lit. meaning *nagaraparivārakathā*. Mahāvyutpatti 2808, *paurī* (for *°ra ?*) *sāmkathyam*.

3 For this Tib lit *sadvākyatvād* (tshig dam. pas. na).

4 For *viśada*. Tib. lit, *nirbhaya* Cf. Buddhist derivation of the word *viśārada* Tib. mi hgigs. pa. which means '*abhaya*' or '*nirbhaya*'. See next note.

5 For *aparyādatta-* Tib. gtugs. pa med. paḥo. Here at the beginning one could expect yons MS adds here *ca* not supported by Tib.

४८क, Tib 94b. 2

मध्वानमुपादायाभिप्रेतत्वात् प्रिया ।][1] [3] वर्तमानमध्वानमुपादाय वस्तुतोऽनुभवतश्चाभिप्रेतत्वात् प्रिया मनापा च वेदितव्या । या सम्मोदिका सा वहुजनस्येष्टा कान्ता[2] प्रिया [4] मनापा च । या धर्मदेशिका सा समाहिता । या शीलाङ्गपरिगृहीता सा विप्रतिसाध्यानुपूर्व्या समाधिसंवर्तनी ॥

तत्र आदशा-दीप्ता[3]या [5] पराभिद्रोहिणी[4] द्वेषविपमोक्षणात् । कर्कशा या परं [प्रति][5] कटुका दुःखसंस्पर्शात् । शिष्टं शुक्लपक्षविपर्ययेण वेदितव्या ॥

संभिन्नप्रलापिकं खलु भवती [6] त्युद्देशपदं ।[6] पञ्चविधा चोदना[7] । अधिकृत्य मिथ्या चोदना[8] कालेऽकाले वादितयाऽकालवादी[9] । अभूतवादितयाभूतवादी । अनर्थोपसंहित [7] वादितयानर्थवादी । परुषवादितयाधर्मवादी । द्वेषा[10]न्तरवादितया निशाम्यवादी[11] । मिथ्याधर्मदेशनाकालेऽचिन्तयित्वा सम्यगुपनिध्याय देशनया निशाम्य वाचं भाषिता भवति ॥

[Tib. 95b. 1] परिभूय शृण्वते देशना परकाले न पूर्वेणापरसम्बद्धार्थतया प्रकीर्णा । [४८ख] अयुक्तिपतितहेत्वपदेशतया न सापदेशा । अननुश्लिष्टदृष्टान्तोपसंहारतया [2] न सावदाना ।[12] हास्यगीतादिक्रीडाकाले नटनर्तक-

---

1 Tib. hdas. pahi dus. las. brten hdod. par. bya. ba yin. pahi phyir. sdug. paho.

2 Tib. wrongly skye ba

3 After *tatra* MS seems to read *ādasā dīptā* with a query. Tib. gžer hdebs (?).

4 MS °*bhisamginī* , Tib. °gnod. paho.

5 Tib. la.

6 Tib. adds here *kālatraye* (dus. gsum. du.).

7 In Tib. *codanā* is generally bskul. ba. but here there is tshig. 'word' or speech'

8 The Tib. word for *codanā* is here indistinct, but it is clear that it is not bskul. ba.

9 For *akālavādī* MS *akāle cāvādī*.

10 As the Xylograph is indistinct *antara* could not be ascertained from Tib.

11 MS adds here *anisāmyavāditayā* not in Tib.

12 Here the passage both in Skt. and Tib is not clear

४८ क, Tib. 95a. 2

हासकलासका[3]दिप्रेक्षाकालेऽनर्थसंहिता ॥ समासार्थः पुनर्यथा निर्दिष्टकालत्रये संभिन्नप्रलाप एव परिदीपितः ॥

अभिध्यालु खलु भवतीत्युद्देशपदं। परस्वे रागमधिपतिं कृत्वा [4] स्वीकरणनिश्चयोत्पत्त्यधिवासनतया तीव्रसंरागः। वित्तं[1] यद्व्यावहारि धनजातं। उपकरणं यत्पारभोगिकं। तदुभयमभिसमस्तं द्रष्टव्यं। [5] यत्परेषां तन्मम स्यादित्यभिध्यायाः प्रवृत्त्याकार एष परिदीपितः समासतोऽभिध्यास्वभावत[2] आलम्बनत आकारतश्च वेदितव्यः ॥

व्यापन्न[6]चित्त खलु भवतीत्युद्देशपदं। परसत्त्वेषु व्यापादमधिपतिं कृत्वोपघातनिश्चयोत्पत्त्यधिवासनतया प्रदुष्टमनःसङ्कल्पः[3]। हन्यन्ता[7]मित्याश्रय[4]-वन्धविपत्तिकामता। वध्यन्तामित्याश्रयवध[5]कामता। जीयन्तामिति पर[6] भोगविपत्तिकामता। अनयेन [Tib 96a. 1] व्यसनमापद्यतामिति स्वयमेव भोगविपत्तिकामता। समासार्थः पूर्ववद्द्रष्टव्यः ॥

मिथ्यादृष्टिकः खलु भवतीत्युद्देशपदं। एवंदृष्टिरित्यात्मनो [2] विवक्षितार्थक्षान्तिरुचिपरिदीपनमेतत्। एववादीति परेषां विवक्षितार्थग्रहणपरिदीपनमेतत्। त्रिविधाभिप्रायस्य [3] दानस्यापवादाद्भोगाभिप्रायस्य शुद्ध्यभिप्रायस्य देवतापूजाभिप्रायस्य नास्ति दत्तं नास्तीष्टं नास्ति हुतमित्याह। हुतमग्निदेवतापूजाभिप्रायस्य [4] द्रष्टव्यं। सविपक्षप्रतिपक्षस्य शीलमयस्य भावनामयस्य कुशलस्यापवादाद्दानमयविपक्षस्य च। नास्ति [5] सुचरितं नास्ति दुश्चरितमित्याह।

---

1 Tib. adds *iti* (žos. bya ba.)

2 Acc. to Tib. *abhidhyāsvābhāvatah* (lit *abhidhyāyāḥ svabhāvatah*, brnab. sems. kyi. ño. bo. ñid. dan)

3 From here to the end of the paragraph the following few lines are figuratively translated into Tib. and are not clear, for instance, for *hanyantām* in the Tib. text we have literally *vadhe kim āyuktam* and then the same way is followed

4 For *-bandha* Tib. *-vadha-* (bsad.). After *-bandha-* Tib. omits *-vipatti-*.

5 For *vadhyantām* MS *badhyantam*. For *-vadha* (Tib. bsad).

6 Tib. lit. *parasya* (gžan. gyi.).

तस्य[1] त्रिविधस्य सविपक्षप्रतिपक्षस्य कुशलस्यापवादान्नास्ति सुकृतदुष्कृत[2] कर्मणा फलविपाक [6] इत्याह। प्रवृत्त्यधिष्ठानप्रत्ययापवादान्नास्त्ययं लोको नास्ति परलोक इत्याह। तत्फल[3]प्रत्ययापवादात्तद्बीजप्रत्ययापवादाच्च नास्ति माता नास्ति पितेत्याह[4]। [7] प्रवृत्तिपुरुषापवादान्नास्ति सत्त्व उपपादुक इत्याह। प्रवृत्तिप्रतिपक्षिकनिवृत्त्यपवादान्न सन्ति लोकेऽर्हन्त इति विस्तरेणाह। तत्र प्रत्यात्मं [४९क] सं[5]क्लेश [ Tib. 96b 1 ]-समपगमात्[6] सम्यग्गताः। सत्त्वेषु[7] मिथ्याप्रतिपत्तिविवर्जितप्रतिपत्तेः सम्यक्प्रतिपन्नाः। हेतुकाल [इति] इमं कालं[8]। फलकाल इति परकालं। [स्वस्येति][9] [2] स्वपुरुषकारत्वात् स्वयमभिज्ञाय [इति]। षष्ठ्या साक्षात्कृत्य[10] [इति]।[11] दर्शनमार्गेण। भावनामार्गेणोपसम्पाद्य[12] [इति] स्वयं च ज्ञानात्परेषां [3] चारोपणात्स्वस्याधिगमस्य प्रवेदयन्ते [इति] क्षीणा मे जातिरित्येवमादि पूर्ववद्विभागो वेदितव्यः। तत्रायं समासार्थः। हेत्वपवादः फलाप[4]वादः क्रियापवादः सद्वस्त्वपवादश्च परिदीपितः॥ तत्र क्रिया बीजोपनिक्षेपणक्रिया धारणाक्रिया[12] आगमनगमनक्रिया उपपत्तिसंवर्तनीयकर्मक्रिया॥

---

1 Tib. seems to read *śuddhasya* (dag. pa )

2 Tib. omits *-duskrta*.

3 MS *pada* for *-phala-* (Tib hbras bu ).

4 In Tib first *nāsti pitā* then *nāsti mātā*.

5 Tib. kun nas ñon mons ; MS omits *sam* Neither of the texts, Skt and Tib , is clear here, the latter being very illegible, but after *samkleśa* it has clearly bźi (for gźi ?), the next word is illegible, then it reads pahi phyir

6 MS *samopagamāt*

7 Tib sems can. rnams. la MS *satyesu*

8 Tib tshe , MS *lokam*. 9 Tib ran gi žes bya. ba. ni

9 Tib. mnon. par śes. pas. źes bya. ba ni. drug pa. so MS *abhijñayā sasthyā*. For *sathyā* Tib. has *sasthena*. But what is to be known hereby

10 Tib. mnon sum du byas. nas žes bya. ba ni mnon. pahi. lam. gyis. so. Literally this would read *sāksātkrtyeti darśana. mārgena*

11 Tib. bsgrubs. te. źes. bya ba. ni MS °*sampādya*

12 In the Xylograph read hdzin for hjin.

४८ ख, Tib. 95b. 5

[5] अपरः पिण्डार्थपर्यायः। सहेतु[1]फलायाः सप्रत्ययप्रवृत्तिपुरुषायाः प्रवृत्तेरपवादः। तत्प्रतिपक्षिकायाश्च निवृत्तेरपवादः परिदीपितः। तत्र प्रवृत्त्यपवादे [6] हेत्वपवादो द्रष्टव्यो न स्वलक्षणापवादः। निवृत्त्यपवादे पुनर्गुणापवादो द्रष्टव्यो न पुद्गलवाद इति ॥

तत्र [7] शुक्लपक्ष एतद्विपर्ययेण सर्वो वेदितव्यः। यत्तु विशेषणं तद्वक्ष्यामि। कामिमिथ्याचारमुपादाय ब्रह्मचारीत्युद्देशपदं। तदेतत्तिसृभिः परिशुद्धिभिः [Tib 97a. 1] शुद्धं वेदितव्यं। कालशुद्ध्या परसम्भावना[2]-शुद्ध्या प्रतिपत्तिशुद्ध्या च। [3]यावज्जीवं चरणाद् आराच्चारी भवति। एषा च कालशुद्धिः। अधिकरणशुद्धितः शुद्ध[०]। [2] अव्यतिक्रमणतः[4] शुचि॰। इयं च परसम्भावनाशुद्धिः ॥

तत्र स्याच्छुद्धो न शुचिरिति[5] चतुष्कोटिक॰। तत्र प्रथमा कोटिरध्यापन्नस्याधिकरणे जयः। द्वितीया कोटिरनध्यापन्नस्याधिकरणे [3] पराजयः। तृतीया कोटिरनध्यापन्नस्या[6]धिकरणे जयः। चतुर्थी कोटिरध्यापन्नस्याधिकरणे पराजयः ॥

तत्र मातृग्रामस्य कायसंसर्गास्वीकरणान्निरामगन्ध। द्वयद्वयसमापदनाद्विरतो मैथुनात्। [4] तदन्येन हस्तसंसर्गादिकेनोपायेन[7] शुक्रशोणितविमोक्षणादप्रणिधाय च ब्रह्मचर्याभ्युपगमाद्विरतो ग्रामधर्मात्। इयं च प्रतिपत्तिसम्पदित्युच्यते ॥

---

1 Tib. omits -*hetu*-.

2 For *sambhāvanā* Tib yid ches. pa meaning *pratyaya* 'belief'. The word is repeated below.

3 For *yāv° bhavati* Tib reads dela rin du spyod pa. žes. bya. ba. ni. srid htshe. hi. bar du. gcod. pahi (?) phyir ro It is not quite clear , but with the suggested reading it may mean *tatra ārāc cārīti yāvajjīvam śuddheh* Here *ārāc cārīti* seems to be a part of a sentence which is being explained.

4 Tib Text omits the word *avyatikaraṇatah*, but reads dag. par. byed. pa. ste. suggesting *śaucakarana*.

5 Tib. adds *ākārena* (tshul. gyis )

6 Tib. ma byas la ; MS *adhyāpannasya*.

7 Tib adds *anyena* (gžan gyis)

समासार्थो [5]ऽत्रैवान्तर्भूतो द्रष्टव्यः ॥

मृषावाद[1]मारभ्य श्रद्धेयो भवति प्रत्ययितत्वात्। प्रत्ययितो विश्वास्यतया[2]। तत्र तत्रा[3]धिकरणे प्रामाणिकत्वेन[4], स्थाप्यते[5] तथा च विश्वास- [6] मापन्नेष्वविसंवादनादनभिद्रोहणादविसंवादकः ॥

समासतस्त्रिविध उपग्रहः परिदीपितो भवति। [6]आशयोपग्रहो विनियोगो[४९ख][7]पग्रहः क्रियोपग्रहश्च ॥

[धर्मलक्षणव्यवस्थानं। ]

तत्र धर्मलक्षणव्यवस्थानं। [7] प्राणातिपातः कतमः। वधाभिप्रायस्य क्लिष्टचेतसः परप्राणिनि तत्रैव वधप्रयोगे वधनिष्ठायां यत्कायकर्म ॥

अदत्ता[Tib. 97b 1]दानं कतमत्। अपहाराभिप्रायस्य क्लिष्टचेतसः परपरिगृहीते वस्तुनि तत्रैवाहारप्रयोगे तत्रैवापहार[8]निष्ठायां यत्कायकर्म ॥

[2] काममिथ्याचारः कतमः। सेवा[9]भिप्रायस्य क्लिष्टचेतसः अगम्यानङ्गादेशाकालेषु[10] तत्रैव काम[3]मिथ्याचारप्रयोगः काममिथ्याचारनिष्ठायां च यत् [काय][11]कर्म ॥

---

1 Tib. lit. °*vādād* (smra ba las) for -*vādam*

2 Tib lit *viśvāsyah* (yid. brtan du run. ba.) for *śraddheyah* One may also expect here dad. par run.

3 In Tib. *tatra* is only once.

4 Tib *pramānatvena* (tshad mar) for *prāmānikatvena* one would expect tshad mar. run. ba. in Tib.

5 After *sthāpyate* MS adds *iti stheyah* of which there is nothing in Tib.

6 Tib. bsam. pa. ñe. bar. gzun. ba. dan MS *āśropa*°

7 The word *viniyoga* could not be ascertained from Tib as the Xylograph could not be read clearly. 8 MS °*hāre*

9 Tib. indistinct Tib appears to read brtsen (for bsten ?)

10 Tib appears to support it reading hjug. par. bya. ba. ma. yin. pa. dan yan. lag. ma. yin. pa. dan. yul. ma yin, pa. dan. dus. ma yin pa. dag. tu. But the meaning is not quite clear. See p. 174, l. 15

11 Tib lus. kyi. las.

४९ ख, Tib. 97a. 4

मृषावाद् कतमः। विनिधाय संज्ञ[ां] वक्तुकामस्य क्लिष्टचेतसः [4]परसत्त्वे तत्रैव कूटसाक्षिप्रयोगे कूटसाक्षिनिष्ठायां च यद्वाक्कर्म।

पैशुन्यं कतमत्। भेदाभिप्रायस्य क्लिष्टचेतसः परसत्त्वेषु तत्रैव [5] भेदप्रयोगे भेदनिष्ठायां च यद्वाक्कर्म।

पारुष्यं कतमत्। परुषं वक्तुकामस्य क्लिष्टचेतसः परसत्त्वेषु तत्रैव परुषवचन[6]प्रयोगे परुषवचननिष्ठायां च यद्वाक्कर्म॥

संभिन्नप्रलापः कतमः। प्रलपितुकामस्य क्लिष्टचेतसोऽबद्धप्रलापप्रयोगेऽबद्धप्रलाप[7]निष्ठायां च यद्वाक्कर्म॥

अभिध्या कतमा। परस्वीकरणाभिप्रायस्य क्लिष्टचेतसः परस्वीकरणाभिप्राये निश्चयप्रयोगे तन्निष्ठायां च [Tib 98a 1] यन्मनस्कर्म॥

व्यापादः कतमः। परव्यापादाभिप्रायस्य क्लिष्टचेतसः परव्यापादाभिप्राय-[1]निश्चयप्रयोगे [2] तन्निष्ठायां च यन्मनस्कर्म॥[2]

मिथ्यादृष्टिः कतमा। अपवादाभिप्रायस्य क्लिष्टचेतसोऽपवादाभिप्रायनिश्चयप्रयोगे [3][3] तन्निष्ठायां च यन्मनस्कर्म॥

प्राणातिपातविरतिः कतमा। प्राणातिपात आदीनवाभिप्रायस्य कुशलचेतसस्त[4]त्संयमप्रयोगे तत्[4]संयमनिष्ठायां च यत्कायकर्म॥

यथा प्राणातिपातविरतिरेवमदत्तादानकाममिथ्याचारमृषावादपैशुन्यपारुष्यसंभिन्न[5]प्रलापाभिध्याव्यापादमिथ्यादृष्टिविरतयो वेदितव्याः। तत्रायं विशेषः। [6] अदत्तादान आदीनवाभिप्रायस्य यावन्मिथ्यादृष्टावादीनवाभिप्रायस्य कुशलचेतस त[4]त्संयमप्रयोगे तत्संयमनिष्ठायां च यन्मनस्कर्म॥

तत्र दश [7] समानानि त्रीणि भवन्ति। कायकर्म वाक्कर्म मनस्कर्म। त्रीणि समानानि दश भवन्ति॥

---

1 MS °*prāya tanniscaya* not supported by Tib

2 For *tannisthāyām ca yan* (Tib. de. mthar thug. par byas. pa. pahi.

3 MS *prayogatannisthāyām yat.*

4 Here and just one word after it Tib. *tat kuśala* (de. yan dge. ba for *tat.*

४९ख, Tib. 97b. 3

कर्मणां हेतुः कतमः। स द्वादशाकारो वेदितव्यः। लोभो द्वेषो मोहः आत्मा [Tib. 98b 1] परः[1] परानुवृत्तिरामिषभयमपकारनिमित्तं क्रीडारतिधर्मसंज्ञा मिथ्यादृष्टिश्च ॥

कर्मावस्था कतमा। समासतः पञ्चाकारा [2] वेदितव्या। मृद्ववस्था मध्यावस्थाधिमात्रावस्थोत्पत्त्यवस्था वासनावस्था च। तत्र मृदुना कुशलेन कर्मणा तिर्यक्षूत्पद्यते। [3] मध्येन प्रेतेषु। अधिमात्रेण नरकेषु। मृदुना कुशलेन मनुष्येषूत्पद्यते मध्येन कामाव [५०क]चरेषु देवेषु। [4] अधिमात्रेण रूप्यारूप्येषु

मृद्ववस्थमकुशलं[2] कर्म कतमत्। यन्मृदुलोभ[द्वेष[3]]मोह[4]निदानं। [5] मध्यावस्थं यन्मध्यलोभद्वेषमोहनिदानं। अधिमात्रावस्थं यदधिमात्रलोभद्वेषमोहनिदानं। कुशलं वा पुनरलोभाद्वेषामोहनिदानं तथैव यथायोगं द्रष्टव्यं। [6] उत्पत्त्यवस्थं यदुत्पन्नानिरुद्धं संमुखीभूतं। वासनावस्थं यदुत्पन्ननिरुद्धं विमुखीभूतं ॥

कर्मणां मुखं कतमत्। तत्समासतो द्विविधं। [7] फलदानमुखमुपघातानुग्रहमुखं च ॥ फलदानमुखं कतमत्। तत्पञ्चाकारं वेदितव्यं। विपाकफलतो निष्यन्दफलतोऽधिपतिफलतो दृष्टधर्मफलतः [Tib 99a. 1] पराधिपतिफलतश्च ॥

तत्र विपाकफलतः। प्राणातिपात आत्मचित्ते भाविते[5] बहुलीकृते नरकेषु[6] विपाको विपच्यते। यथा प्राणातिपात [2] एवमवशिष्टेष्वकुशलेषु[7] कर्मपथेषु। इदमेषां विपाकफलं ॥

---

1 So Tib. reading bdag, dan pha rol, dan, lit. *ātmā paraś ca*.

2 Tib. mi. dge. bahi. MS *mṛdvasthaṃ kuśalam*.

3 Tib že. sdañ.

4 MS *-mogha-*, it is remarkable, as in Pali in *moghapurisa*, Tib. gti. mug.

5 Tib *saṃsevite* (? kun. tu. bsten. cin) for *ātmacitte*

6 Tib sems. can. dmyal. ba rnams. kyi. nan MS *satan*.

7 Tib. mi dge. bahi

४९ख, Tib. 98a. 7

तत्र निष्यन्दफलतः। सचेन्मनुष्याणां[1] सभागतायामल्पायुष्को भवति। [सम्भोगविपन्नो [3] भवति। ][2] अगुप्तद्वारो[3] भवति। अभ्याख्यानबहुलीभवति। विभिन्नमित्रो भवति। अमनोज्ञशब्दश्रोता भवति। अनादेय[4]वाक्यो भवति। तीव्ररोगो भवति। [4] तीव्रद्वेषो भवति। तीव्रमोहो भवति। इदमेषां निष्यन्दफल॥

तत्राधिपतिफलतः। अकुशलानां कर्मणामासेवितत्वाद् भावितत्वाद्बहुलीकृतत्वात्तेनाधिपतिना बाह्या[5] [5] भावा अल्पौजस्कफला भवन्ति असम्पन्नफलाः[6] पूतिफलाः परिवृत्त[7]फलाः शीर्णफला अस्वादुफला असदाफला अल्पक[6]फला अपथ्यफला अफलाश्च। एतद्विपर्ययेण कुशलकर्म द्रष्टव्यं॥

तत्र दृष्टधर्मफलतः। द्वाभ्यां कारणाभ्यां कर्म दृष्टफलं भवत्यकुशलं वा कुशलं वा। आशयतो वस्तुतश्च। तत्राशयोऽष्टाकारो वेदितव्यः। तद्यथा अपेक्षाशयो निरपेक्षाशयोऽपकाराशयः करुणाशय आघाताशयः प्रसादाशयः [Tib. 99b 1] कृतघ्नाशयः कृतज्ञाशयश्च॥

तत्रापेक्षाशयतोऽपि कर्माकुशलं दृष्टधर्मवेदनीयं। यथापीहैकत्योऽधिमात्रां[8] कायनिरपेक्षतां भोगनिरपेक्षतां भवनिरपेक्षता[2]मभिसंस्करोति॥

तत्र निरपेक्षाशयतोऽपि कर्म कुशल[9] दृष्टधर्मवेदनीयं भवति। यथापीहैकत्योऽधिमात्रां कायनिरपेक्षतां भोगनिरपेक्षतां भवनिरपेक्षतामभिसंस्करोति॥

---

1 After *sacet* MS *icchamtvamāgacchati* with a query. But there is nothing of it in Tib.

2 Tib. lons. spyod kyis phons. par. hgyur ba dan.

3 Tib. wrongly *-dāro* (chun. mo 'wife') for *-dvāro*. Evidently the Tib. translator mistook *dvāra* for *dāra*.

4 MS *anādeyo*, Tib. lit. *apriya*. (mi. sñan. pa) for *anādeya*.

5 In the Xylograph read gyi for gyis.

6 Tib lit. *apakva-* (mi. smin. pa) for *asampanna*.

7 Tib. lit. *anya* (gžan) for *parivṛtta*.

8 Tib. omits *adhimātrāṃ* here and just before *-nirapekṣatām*.

9 Tib. *akuśalam* (mi. dge. ba).

तत्रापकाराशयतोऽपि [3] कर्माकुशलं दृष्टधर्मवेदनीयं भवति। यथापीहैकत्यः परसत्त्वेषु परपुद्गलेष्वधिमात्रमपकाराशयमभिसंस्करोति ॥

तत्र करुणाशयतोऽपि कर्म कुशलं [4] दृष्टधर्मवेदनीयं भवति। यथापीहैकत्यः परसत्त्वेषु परपुद्गलेष्वधिमात्रं करुणाशय[1]मभिसंस्करोति ॥

तत्राघाताशयतोऽपि कर्माकुशलं [5] [५०ख] दृष्टधर्मवेदनीयं भवति। यथापीहैकत्यो बुद्धे वा धर्मे वा सङ्घे वान्यतमान्यतमस्मिन्वा गुरुस्थानीये वस्तुन्यधिमात्रमाघाताशयं प्रतिघाताशयमभिसंस्करोति ॥

[6] तत्र प्रसादाशयतोऽपि कर्म कुशलं दृष्टधर्मवेदनीयं भवति। यथापीहैकत्यो बुद्धे वा धर्मे बा सङ्घे बाधिमात्रं प्रसादाशय[2]मधिमुक्त्याशयमभिसंस्करोति ॥

तत्र[3] कृत[1]घ्नाशयतोऽपि [7] कर्माकुशलं दृष्टधर्मवेदनीयं भवति। यथापीहैकत्यो मातरि वा पितरि वान्यतमान्यतमस्मिन्वोपकारवस्तुन्यधिमात्रं कृतघ्ना[5]शयमभिद्रोहाशयं रौद्राशय [Tib. 100a 1]मभिसंस्करोति ॥

तत्र कृतज्ञाशयतोऽपि कर्म कुशलं दृष्टधर्मवेदनीयं भवति। यथापीहैकत्यो मातरि पितरि वान्यतमान्यतमस्मिन्वोपकारवस्तुन्यधिमात्रं कृतज्ञाशयं प्रत्युपकाराशय[मधिमात्र [2]मभिसंस्करोति] ॥

तत्र वस्तुतोऽकुशलं कर्मानन्तर्येष्वानन्तर्यभावेषु[6] च दृष्टधर्मवेदनीयं भवति। पञ्चानन्तर्याणि कर्माणि। तद्यथा मातृवधः पितृवधो[7] [3]ऽर्हद्वधः सङ्घभेदस्तथागतस्यान्तिके दुष्टचित्तरुधिरोत्पादनं च ॥

आनन्तर्यसभागानि पुनः। यथापीहैकत्योऽर्हन्तं वा गच्छति मातरं

---

1 Tib adds here *upakārāśayam ca* (phan. pahi bsan pa ).

2 Tib. adds here *evam* (de. ltar )

3 Tib. omits it

4 Tib. lit. *akṛtajñāśayataḥ* (drin. du. mi. bahi. bsam. It is also below.

5 Tib. lit *akṛtajñāśayam*. MS *akṛtaghnāśayam*. See note 4.

6 In Tib *bhāveṣu* could not be verified as it is illegible here.

7 In Tib. first *pitṛvadhaḥ* then *mātṛvadhaḥ*.

वा[1] ॥ [4] चरमभविकाय वा बोधिसत्त्वाय प्रहरति। देवतायतनेषु वा चत्वरेषु वा शृङ्गाटकेषु वा पशुवधमनुप्रवर्तयति। विश्वस्तं वा परमविश्वासप्राप्तं [5]मित्रं वा सुहृदं वा वयस्यकं वा द्रुह्यति व्यंसयति[2] विप्रवासयति। दुःखितं वा पुनर्निष्किञ्चनमनाथमप्रतिशरणं शरणागतमप्रदानेनोप गृह्योत्तरत्राभिद्रुह्यति पीडायै प्रतिपद्यते। सङ्घायद्वारं वापहरति। [6] चैत्यभेदं वा करोति। इत्येवंभागीयं कर्मानन्तर्यसमागमित्युच्यते॥

कुशलं वा पुनर्वस्तुतो दृष्टधर्मवेदनीयं भवति। यथापीहैकत्यो मातरमश्राद्धां श्रद्धासम्पदि [7] समादापयति विनयति निवेशयति प्रतिष्ठापयति। यथाश्राद्धां श्रद्धासम्पद्येवं दुःशीलां शीलसम्पदि। मत्सरिणीं योगसम्पदि[3] दुष्प्रज्ञां प्रज्ञासम्पदि [Tib 100b 1]। यथा मातरमेवं पितरं। मैत्र्या[4] [:] समापत्तेर्व्युत्थितं पिण्डकेन प्रतिपादयति। [कार्य]कारान्वा प्रयुंक्ते[5]। एवं करुणाया[6]निरोधसमापत्तेः स्रोत[2]आपत्तिफलाद्[7]व्युत्थितमर्हत्वफलाच्च[8] पिण्डकेन प्रतिपादयति कारान्वा प्रयुक्ते। तथा साक्षाद्बुद्धे भगवति कारान्प्रयुंक्ते। यथा बुद्धे भगवत्येवं शैक्षाशैक्षसङ्घे॥

[3]एष्वेव वा पुनर्वस्तुषु विपर्ययेणाकुशलमपि कर्म दृष्टधर्मवेदनीयं भवत्यपकारनैमित्तिकं॥

तत्र पराधिपतिफलतः कर्म दृष्टधर्मवेदनीयं भवति। यथापि तद्यस्मिन्ग्रामक्षेत्रे[9] तथागतो विहरति। [10]तत्र [4]नेतय उपद्रवा वोपसर्गा [11]उत्पद्यन्ते।

---

1 Here from Tib we can ascertain only *arhantam vā* (dgra. bcom pa. ham), other letters being very illegible MS has as in the body *arhantinīm*(?) for *arhantam* which is emended.

2 The root *vi √ams* means 'to cheat.'

3 Tib. not clear appearing to read gtod. hdar. ldan. pa., but it does not give any sense. 4 Tib byams. pa. la.

5 Tib. reads .bya. ba byed. pa. dan. MS simply *kārān*. So two times more below.

6 Tib. sñin rje. MS *evamarnāyāḥ*, evidently for *karuṇāyāḥ*.

7 For *phalād* Tib *phalalābhāt* (ḥbras. bu. thob. pa. las)

8 Tib. omits *arhatvaphalāc ca*.

9 Tib. simply *sthāne* (gnas) 10 MS adds *iti* after it.

11 Lit. in Tib. there is *ca* (dan) and not *vā* (ham), and there is nothing to show that it was put after *upadravāḥ*.

५० ख, Tib. 100a. 3

अनीतिकोऽनुपद्रवोऽनुपसर्गो जनकायः सुखस्पर्शं विहरति। [५१क] यदुत बुद्धानुभावेन [5]। यथा बुद्धा एवं चक्रवर्तिनो मैत्रविहारिणश्च बोधिसत्त्वाः। तथा बोधिसत्त्वः करुणाशयो दरिद्रान् दुःखितान् [6] दैवोपहतान् सत्त्वानभिसमीक्ष्यान्नेन पानेन धनेन धान्येन कोशेन सन्तर्पयति। ते च तेन प्रत्ययेन सुखस्पर्शं विहरन्ति। इदमप्येवंभागीयं पराधिपतिकं दृष्टधर्म [7] वेदनीयं कर्म वेदितव्यं॥

तत्रोपघातानुग्रहः। अष्टाभिरुपघातमुखैः सत्त्वेषु दशाकुशलाः कर्मपथा व्यवस्थापिताः। अष्टावुपघातमुखानि कतमानि। प्राणोपघातो [Tib. 101a. 1] भोगोपघातो दारोपघातः कूटसाक्ष्युपघातः (?) सहायोपघातो दोषसमाख्यानोपघातः प्रसादोपसंहारोपघातो भयोपसंहारोपघातश्च[1]। [2] एतद्विपर्ययेण कुशलानां कर्मपथानां मुखानि द्रष्टव्यानि॥

कर्मणामधिमात्रता तीव्रता गुरुता[2] कतमा। सा षड्भिराकारैर्द्रष्टव्या[3]। अभिसंस्कारतो [3]ऽभ्यासतः स्वभावतो वस्तुतो विपक्षैकान्ततो विपक्षोपघाततश्च। तत्राभिसंस्कारतः। यथापीहैकत्यस्तीव्रेण लोभद्वेषमोहपर्यवसानेन [4] तीव्रेण वा लोभाद्वेषामोहाभिसंस्कारेण कर्म समुत्थापयति॥ तत्राभ्यासतः। यथापीहैकत्येन कुशलमकुशलं वा कर्म दीर्घरात्रमासेवितं भवति [5] भावितं बहुलीकृतं॥ तत्र स्वभाव[तः]। तद्यथा संभिन्नप्रलापात्पारुष्यं महासावद्यतरं। पारुष्यात्पैशुन्यं महासावद्यतरं। पैशुन्यान्मृषावादो महासावद्यतरः। [मृषा [6][4]वादात्काममिथ्याचारो महासावद्यतरः][5] काममिथ्याचारादद्त्तादानं महासावद्यतरं। अदत्तादानात्प्राणातिपातो महासावद्यतरः। अभिध्याया [7] व्यापादो सावद्यतरः। व्यापादान्मिथ्यादृष्टिर्महासावद्य-

---

1 Skt. text from *doṣa°* to *ghātaśca* could not properly be compared with Tib. which is not here quite clear.

2 Acc to Tib at least here *ca* (dan) is to be added

3 Tib. lit *veditavyā* (rig. par. bya.) for *drastavyā.*

4 Tib brdzun, du smra. ba. las (?) ḥdod. pa. la. log. par. gyen. pa. kha. na. ma. tho. ba. ches. ce. ba dan/

5 Tib adds *anavadyataram* reading ches. kha. na ma. tho ba. med. pa

तरा। दानमयाच्छीलमयमनवद्यतरं । शीलमयाद्भावनामयं[1] [Tib. 101b. 1] श्रुतमयाच्चिन्तामयं[2] ॥

तत्र वस्तुतः। यथापीहैकत्यो बुद्धे वा धर्मे वा सङ्घे वान्यतमान्यतमस्मिन्वा गुरुस्थानीये वस्तुनि गुरुकवस्तुकमेवापकारं वोपकारं वा प्रयुङ्क्ते ॥

[2]तत्र विपक्षैकान्ततः। यथापीहैकत्य एकांशेनैवाकुशलं कर्म समादाय वर्तते यावज्जीवं। नो त्वेकदा कुशलं॥ तत्र विपक्षोप[3]घाततः[3]। यथापीहैकत्योऽकुशलं कर्म विपक्षभूतं प्रहाय कुशलं कर्म विशोधयति ॥

[कर्मणां विपर्यासः]

कर्मणां[4] विपर्यासः कतमः। स त्रिविधो द्रष्टव्यः। क्रियाविपर्यासो [5]ग्राहविपर्यासो [4]रतिविपर्यासश्च ॥

तत्र क्रियाविपर्यासः। यथापीहैकत्योऽन्यस्य प्राणिनो वधाय चेतयते। अन्यं घातयति। तत्र चास्ति प्राणातिपातो नो तु प्राणातिपातिकमवद्यम्[6] [5] अपि तु प्राणातिपातजातीयं[7] प्राणातिपातसदृशमनुसभागमवद्यं [प्र]सवति। नो चेदन्यं प्राणिनं घातयति अपित्वप्राणिभूते[8] वस्तुनि प्रहृत्य प्राणी मे[9] घातित इति मन्यते। [५१ ख] तत्र [6]नास्ति प्राणातिपातो नास्ति प्राणातिपातिकमवद्यमपितु प्राणातिपातजातीयं[10] प्राणातिपातसदृशमनुसभागमवद्यं प्रसवति[11] ॥

1 Tib. adds *anavadyataram* [ches ] kha na. ma. tho. ba. med pa. lta buho.

2 Tib, mi. mthun. pahi. phyogs. seb(?) ba. ni,

3 In the Xylograph read sbyon for spyod.

4 Tib. las. rnams kyi ; MS *karmano*.

5 Tib. here first *grāhaviparyāsah* then *kriyā°*

6 MS wrongly *anavadyam*. Tib. follows the Skt text reading: de. la. srog gcod. pa. ni. yod. la/srog. gcod. paḥi. kha. na. ma tho ba. ni. med. do.

7 Omitted in Tib. but see below.

8 Tib. *prānisadrśe* (srog chags. lta. bahi.) for *aprānibhūte*.

9 That *me* is used here in the sense of *mayā* is clear from Tib reading bdag gis.

10 In the Xylograph read lta. bu. for la. bu.

11 In the Xylograph read bskyed. par. for skyed. bar.

५१क, Tib. 101a. 7

[7]यथा प्राणातिपात एवमदत्तादानादिषु कर्मपथेषु क्रियाविपर्यासो यथायोगं वेदितव्यः ॥

तत्र ग्राहविपर्यासः। यथापीहैकत्य एवंदृष्टिरेवंवादी भवति। नास्ति दत्तं नास्तीष्टमिति विस्तरेण मिथ्यादृष्टिर्वक्तव्या। तस्यैवं [Tib 102a 1] भवति। नास्ति घ्नतो वा घातयतो[1] वा अदत्तमाददानस्य कामेषु मिथ्याचरतो मृषा[2]वाचं भाषमाणस्य पैशुन्यमाचरतः परुषां वाचं भाषमाणस्य [2]संभिन्नं प्रलपतो दानानि वापुनर्ददत उपवासमुपवसतः पुण्यानि कुर्वतः शीलं समादाय वर्तमानस्य[3] नास्त्यतो निदानं पापं वा पुण्य वेति। [3]यथापीहैकत्य एवंदृष्टिरेवंवादी। ब्राह्मणद्विषो ब्रह्मद्विषो देवद्विषो हन्तव्याः। हत्वा च पुनस्ततोनिदानं पुण्यमेव भवति न पापं। तेषु चादत्ता[4]दानं काममिथ्याचारो मृषावादः पैशुन्यं पारुष्यं संभिन्नप्रलापः पुण्यायैव भवति नापुण्याय ॥

तत्र रतिविपर्यासः। [5]यथापीहैकत्योऽकुशलान् कर्मपथान् [4]समादाय वर्तमानोऽत्यन्तं रमते। तैश्च क्रीडाधर्ममापद्यते[5] ॥

कर्मणां पर्यायः कतमः। अस्ति कर्म कृतमस्त्यकृतं। अस्त्युपचितम्[6] अस्त्यनुपचितं। अस्ति साञ्चेतनीयमस्त्यसाञ्चेतनीयं। एवं नियतविपाकमनियतविपाकं। विपक्वविपाकमविपक्वविपाक।[6] कुशल[7]मकुशलमव्याकृतं। संवरसंगृहीतमसंवरसंगृहीतं। नैव संवरनासंवरसंगृहीतं। दानमयं शीलमयं भावना [Tib. 102b 1]मयं। पुण्यमपुण्यमानिञ्ज्यं। सुखवेदनीयं दुःखवेदनीयमदुःखासुखावेदनीयं[7] दृष्टधर्मवेदनीय[2]मुपपद्यवेदनीयं

---

1 Tib. gsod du hjug pa dan , MS *ghāmyataḥ*

2 MS *mṛṣām* 3 Tib unnecessarily has here med. do.

4 Tib. lit. *akuśalam dharmam* (me. dge bahi. chos.) for *akuśalān karma-pathān.*

5 For *āpadyate* generally hdzin. pa In Tib. it has lit. *ācarati* (spyod. pa )

6 Tib. rnam. par smin pa. rnam par. smin. zin pa. dan rnam. par. smin pa. rnam par. ma smin [zin ?] pa dan So below. See Tib. 93a. 3. For *vipakva* and *avipakva* MS *vipakṣa* and *avipakṣa.*

7 Tib. sdug. snal. yan. ma. yin. bde. ba. han ma. yin pa. myon. bar. hgyur. ba. dan. MS *duḥkhāsukhavedanīyam.*

५१ ख, Tib. 101b 7

परपर्याय[1]वेदनीयं। अतीतमनागतं प्रत्युत्पन्नं। कामप्रतिसंयुक्तं रूपप्रतिसंयुक्तमारूप्यप्रतिसंयुक्तं। [3]शैक्षमशैक्षं। नैव शैक्षं नाशैक्षं। दर्शनप्रहातव्यं भावनाप्रहातव्यमप्रहातव्यं। कृष्णं कृष्णविपाकं। शुक्लं शुक्लविपाकं। कृष्णशुक्लं कृष्णशुक्लविपाकं [4]। अकृष्णमशुक्लविपाकं। कर्म[2] कर्मक्षयाय[3] संवर्तते। वङ्क[4]कर्म दोषकर्म कषायकर्म शुचिकर्म[5] मुनिकर्म चेति॥

कृतं कर्म कतमत्। यच्चेतितं[5] चेतयित्वा पुनः कायेन वाचा समुत्थापितं। अकृतं कर्म यदचेतितमचेतयित्वा पुनर्न कायेन न वाचा समु-[6]त्थापितं॥

उपचितं[6] कर्म कतमत्।[7] दशविधं कर्म स्थापयित्वा। तद्यथा। स्वप्नकृतमज्ञान[8]कृतमसञ्चिन्त्यकृतमतीव्रानतितीक्ष्ण[8][7]कृतं भ्रान्तिकृतं स्मृतिसम्प्रमोषकृतमनिच्छाकृतं प्रकृत्यव्याकृतं[9] विप्रतिसारोपहतं प्रतिपक्षोपहतं च। इत्येतद्दशविधं कर्म स्थापयित्वा यदन्यत्कर्म॥

[Tib. 103a. 1]अनुपचितं कर्म दशविधं यथानिर्दिष्टमेव॥

संचेतनीयं कर्म यत्संचिन्त्य कृतमुपचितं वा॥

[2]असंचेतनीयं कर्म यदसंचिन्त्य कृतं॥

नियतवेदनीयं कर्म यत्संचिन्त्य कृतमुपचितं च॥

अनियतवेदनीयं कर्म यत्संचिन्त्यकृतं नोपचितं॥

---

1 For *paryāya* generally rnam. grans in Tib. but it has here lan. (?) grans.

2 Tib. *tat* (de).

3 Tib. zad, MS *kṣepāya*.

4 Tib. yon. po. The word is a Prakritic form of Skt *vakra* 'crooked, not straight'.

5 Tib adds here *vā* (bsams. pa. ham). So after *yad acetitaṃ*.

6 See A. K. IV. 120.

7 Omitted in Tib. Tib. ma śes. par, MS *ajñāta*.

8 So the MS *anatīksna*. but it is not supported by Tib. reading rgyun. chags. ma. yin. par. It is not clear to me. There is nothing here of *tīksna* or *atīksṇa*.

9 Tib. ran. bžin. gyis (Xylograph byis) lun. du. ma. bstan. pa. dan. MS *prakṛtyāvyākṛtaṃ*.

५१ ख, Tib. 102b. 2

विपक[3] विपाकं[1] कर्म यद्दत्तफलं ॥

अविपकविपाकं[2] कर्म यददत्तफलं ॥

कुशलं कर्म यदलोभाद्वेषामोहनिदानं ॥

[4]अकुशलं कर्म यल्लोभद्वेषमोहनिदानं ॥

अव्याकृतं कर्म यन्नैव लोभद्वेषमोहनिदानं[5] नालोभाद्वेषामोहनिदानं ॥

संवरसंगृहीतं कर्म यत्प्राति[५२क]मोक्षसंवरसंगृहीतं वा ध्यानसमापत्तिप्रहाणसंवरसंगृहीतं वानास्रव[6]संवरसंगृहीतं वा ॥

असंवरसंगृहीतं कर्म यद्वादशस्वासंवरिकनिकायेषु ।[3] द्वादशासंवरिकनिकायाः । तद्यथा । औरभ्रिकाः कौक्कुटिकाः[7]सौकरिकाः श्वशाकुन्तिकाः[4] शशवागुरिकाश्चौरा वध्यघाता वन्धनपालकाः सूचकाः कारणाकारापका नागबन्धका नागमण्डलिकाश्च ॥

[Tib. 103b. 1] नैवसंवरनासंवरसंगृहीतं कर्म । त्रिविधं च संवरं स्थापयित्वा आसंवरिकनैकायिकं च कर्म स्थापयित्वा तदन्यनैकायिकं यत्कुशलाकुशलाव्याकृतं कर्म [2] दानमयं निदानतः समुत्थानतः स्वभावतोऽधिष्ठानतश्च वेदितव्यं । तत्र निदानतोऽलोभाद्वेषामोहनिदानं । समुत्थानतः देय[5]वस्तु[3]परित्यागाय कायवाक्कर्मसमुत्थापिका चेतना अलोभाद्वेषामोहसहगता । स्वभावतो यत्समुत्थापितं देयवस्तुपरित्यागे [4]कायवाक्कर्म । तत्राधिष्ठानतो देयं वस्तु प्रतिग्राहकश्चाधिष्ठानं । यथा दानमयमेवं शीलमयं भावनामयं यथायोगं[5]वेदितव्यं ॥

तत्र शीलमयस्य निदानं समुत्थानं च तुल्यं । स्वभावः संवरसंगृहीतं कायकर्म वाक्कर्म । अधिष्ठानं सत्त्वासत्त्वसंख्यातं वस्तु । भावनामयस्य[6] निदानं समाधिनिदानमलोभाद्वेषामोह[6]समुत्थानं । तत्सहगतः समाधिः[7]

---

1 For *vipakva* (Tib rnam. par. smin. pa ) MS *vipaksa* as before.

2 Tib. rnam. par. smin. pa. rnam. par ma. smin. pahi MS *avipaksam avipākām*

3 The Tib text here and below is *ris* for *rigs*. 4 So the MS.

5 Tib. sbyin. par. bya bahi ; MS *svādeya.*

6 According to Tib. the sentence ends here and the reading should be as it is given above. MS °*dvesāmohasamutthānam*

7 Tib. kun. nas. slon ba. de. dan. ldan. paḥi. tin. ne. ḥdzin. MS *tatsahagatā manodhi* (?).

५१ख, Tib. 103a. 2

[1]निर्हारिका चेतना स्वभावः समाधिरधिष्ठानं दशसु दिक्षु[7] अदुःखासुखिकः सत्त्वधातुः। दानपतिलिङ्गानि शीलवल्लिङ्गानि भावकलिङ्गानि पूर्ववत्सर्वं वेदितव्यं ॥

पुण्यं कर्म यत्सुगति[Tib. 104a. 1]वैपाक्यं[2] पञ्चगतिवेदनीयं च कुशलं। अपुण्यं कर्म यदपायवैपाक्यं पञ्चगतिवेदनीयं चाकुशलं। आनिञ्ज्यं कर्म यद्रूपारूप्य [2]वैपाक्यं रूप्यारूप्यवेदनीयं च कुशलं च कर्म। सुखवेदनीयं कर्म यत्पुण्यं[3]निध्यानवेदनीयं[4] चानिञ्ज्यं। दुःखवेदनीयं [3] कर्म यदपुण्यं। अदुःखासुखवेदनीयं कर्म यत्सर्वत्रालयविज्ञानवैपाक्यं कर्म। चतुर्थाच्च ध्यानादूर्ध्वं[4]मानिञ्ज्यं। दृष्टधर्मवेदनीयं कर्म यद्दृष्टधर्मफलं। उपपद्यवेदनीयं कर्म यदनन्तरजन्मफलं। अपरपर्यायवेदनीयं कर्म यत्तदूर्ध्वं[5]जन्म[5]फलं। अतीतं कर्म यद्वासनावस्थं दत्तफलमदत्तफलं वा। अनागतं कर्म यदनिर्वृत्तं[6] वर्तमानं [6] कर्म यदभिसंस्कृतमभिसञ्चित[7]मनुपरतं। कामप्रतिसंयुक्तं कर्म यत्कामधातुवैपाक्यं कामधातुपर्यापन्नं। रूपप्रतिसंयुक्तं कर्म रूप [7] धातुवैपाक्यं रूपधातुपर्यापन्नं। आरूप्यप्रतिसंयुक्तं यदारूप्यधातुवैपाक्यमारूप्यधातुपर्यापन्नं। शैक्षं कर्म [Tib. 104b. 1] पृथग्जनापृथग्जनशैक्षसन्तानिकं कुशलं। अशैक्षं कर्म यदशैक्षसन्तानिकं कुशलं। नैव शैक्षनाशैक्षं कर्म तदुभयं [५२ख] स्थापयित्वा [2] तदन्यसन्तानिकं यत् कुशलाकुशलाव्याकृतं। दर्शनप्रहातव्यं कर्म यदपायप्रतिसंवेदनीयमकुशलं। भावना[3]प्रहातव्यं कर्म यत्सुगतिप्रतिसंवेदनीयं कुशलाकुशलाव्याकृतं। अप्रहातव्यं

---

1 In Tib. only *vipāka* (rnam. par. smin )
2 Tib. omits *puṇyam*.
3 Tib. lit. *dhyāna* (bsam. gtan ) adding *trayam* (gsum) before *vedanīyam*.
4 In the Xylograph read yan. chad, for pan. chad.
5 Tib. reads *anāgataṃ karma yad anirvṛttam anabhisiddham* (ma, hons. pahi. las. ni. ma. skyes. śin./mnon. par. ma. grub. pa. gan. yid. paho
6 Tib. mnon. par. bsags. la. , MS *abhisaṃcetitaṃ*.
7 Tib. hjig. rten. pa. dan. MS *laukika lokottara*.

५२क, Tib. 103b. 6.

कर्म यल्लौकिकं[1] लोकोत्तरमनास्रवं। कृष्णं [4] कृष्णविपाकं कर्म यदपुण्यं। शुक्लं[2] शुक्लविपाकं कर्म यदानिञ्ज्यं। कृष्णशुक्लं कृष्णशुक्लविपाकं कर्म यत्पुण्यमकुशलमप्रतिद्वन्द्वतया। [5] तथाह्यप्रहीणेऽपुण्ये[3] पुण्यकर्मव्यवस्थानं क्रियते। अकृष्णमशुक्लमविपाकं कर्म कर्मक्षयाय संवर्तते। [6] यल्लोकोत्तरमनास्रवं कर्म त्रयाणामपि कर्मणां प्रहाणाय प्रतिपक्षत्वाद् वङ्ककर्म यदितो बाह्यानां तीर्थ्यानां कुशलाकुशलं। दोषकर्म [7] यत्ता[4]वद्वङ्ककर्म। दोषकर्मापि तत्। अपि च। दोषकर्म यदिह धार्मिकाणां[5] पृथग्जनानां शासने विपरीतदर्शिनां स्वयं[6] दृष्टिपरामर्शस्थायिनां मिथ्यानिश्चितानां यत्कुशलाकुशलं [Tib 105a. 1] कर्म। कषायकर्म यत्तावद्वङ्ककर्म दोषकर्म कषायकर्मापि तत्।[7] अपि खलु कषायकर्म यदिह धार्मिकाणां पृथग्जनानां शासनेऽनिश्चितानां [2] सन्दिग्धबुद्धीनां यत्कुशलाकुशलं कर्म[8]। [3] शुचिकर्म यदिह धार्मिकाणां पृथग्जनानां शासने सम्यङ्निश्चितानामसन्दिग्धबुद्धीनां कुशलं कर्म। [4] मुनिकर्म यदिह धार्मिकाणामपृथग्जनानामार्याणां शैक्षाशैक्षं कुशलं कर्म।[9]

[5] अपरः पर्यायः बाह्यकानामेव तीर्थ्यानां त्रीण्यपि। तत्र मिथ्याप्रतिपत्त्यर्थेन वङ्कं। तदाश्रितगुणाभि[6]निर्हारप्रतिबन्धनार्थेन दोषः[10]। तथैव[11] विप्रतिबन्धनार्थेन कषायो[12] वेदितव्यः।

---

1 Tib. hjig. rten pa dan. MS *laukikalokottara*
2 In the Xylograph read dkar bahi for dgar bahi
3 Tib bsod. nams. ma. yin pa. ma. spans. la. MS *apuṇyapuṇyakarma*.
4 Tib. does not support *tāvat*.
5 For *dhārmikāṇām* here and below in Tib we have simply chos. and not chos dan ldan as is expected
6 The Xylograph is illegible.
7 Tib. would literally read *kaṣāyakarma vaṅkakarma yad doṣakarma tad eva kaṣāyakarmāpi tad eva.*
8 Here Tib. has *aparaḥ paryāyaḥ° veditavyam*, but the Skt text reads it below after *śucikarma* and *munikarma*
9 Tib. *dharma* (chos) for *karma* 10 MS *doṣam*
11 Tib. de. bžin du., MS *tathatā eva*.
12 MS *kaṣāyam*, and accordingly *veditavyam* for *veditavyaḥ*.

५२ ख, Tib. 104b. 3

[आदीनवः]

[7] कर्मणामादीनवः कतमः। समासतः सप्ताकार आदीनवो वेदितव्यः। यथापि प्राणातिपातिकः प्राणातिपाताधिकरणहेतोरात्मव्याबाधाय चेतयते परव्याबाधायोभयव्याबाधाय दृष्टधार्मिकमवद्यं प्रसवति साम्परायिकं। दृष्टधर्मसाम्परायिकं[1] तज्जं चैतसिकदुःखदौर्मनस्यं प्रतिसंवेदयते। कथमात्मव्याबाधाय चेतयते। प्राणिव्याबाधाय प्रयुक्तस्ततो निदानं वधं बन्धनं वा ज्यानिं वा गर्हणां वा प्राप्नोति। नो तु शक्नोति परं व्याबाधितुं[2]। कथं परव्याबाधाय। तथैव प्रयुक्तः परं व्याबाधते। नो तु ततोनिदानं वधं वा [Tib. 105b. 1] यावद्गर्हणां वा निगच्छति। कथमुभयव्याबाधाय। यत्तथैव प्रयुक्तः परं च व्याबाधते तन्निदानं च परतो वधं वा यावद्गर्हणां वा निगच्छति। कथं दृष्टधर्मधर्मिकमवद्यं प्रसवति। यथात्मव्याबाधाय चेतयते। [2] कथं साम्परायिकमवद्यं प्रसवति। यथा परव्याबाधाय चेतयते। कथं तज्जं चैतसिक[3]दुःखदौर्मनस्यं प्रतिसंवेदयते [५३क] प्राणिव्याबाधाय प्रयुङ्क्ते। सचेत्पडाकारमादीनवं न निगच्छति। न चास्य प्राणातिपातः सम्पद्यते यथेप्सितः सः।[3] इच्छामूल (?)[4]निदानं [4] तज्जं चैतसिकं दुःखदौर्मनस्यं प्रतिसंवेदयते॥

अपि खलु दशादीनवा दौःशील्ये यथासूत्रमेवं विस्तरेण वेदितव्याः। [5] चतुर्णां पुनरकुशलानां कर्मपथानां सुरामैरेयस्य पञ्चमस्योपासकशिक्षासम्बन्धेनादीनवा उक्ता भगवता[5] तेऽपि विस्तरेण वेदितव्याः। तद्यथा नन्दिकसूत्रे।[6]

---

1 Tib. adds *avadyam prasavati* (kha nam. tho ba. bskyed pa. dan.) after *sāmparāyikam* and *dṛṣṭadharmasāmparāyikam*

2 MS *vyāvādhayitum* 3 Not supported in Tib.

4 Tib hdod. pas dnos. pahi. gži las. , for *icchāmūla* which is only guessed MS *icchā vima(?)ta*

5 Before this word Tib adds bcos. pahi. chan gi skabs. su. ; but it is not clear.

6 The following passage is quoted from *Nandikasūtra* (Dgah. byed. kyi mdo) in AK, iv 85 surāmaireyamadyapramādasthānenāsevitena bhāvitena bahulīkṛtena kāyasya bhedān narakeṣūpapadyate. Cf DN, iii 182

[ जन्मसंक्लेशः ]

[6] जन्मसंक्लेशः कतमः। स चतुर्विधैराकारैर्द्रष्टव्यः। प्रभेदतोऽपि व्यसनतो[1]ऽप्यनियमतोऽपि प्रवृत्तितोऽपि ॥

[प्रभेदाः]

तत्र जन्मनः प्रभेदः[2] धातुप्रभेदतोऽपि गतिप्रभेदतोऽपि [7] स्थानान्तरप्रभेदतोऽप्यभिजातिप्रभेदतोऽप्यात्मभावलोकप्रभेदतोऽपि वेदितव्यः ॥

तत्र धातुप्रभेदतः। कामावचरं रूपावचरमारूप्यावचरं जन्म ॥

गतिप्रभेदतः [Tib. 106a. 1] पञ्चसु गतिषु[3] पञ्चविधं जन्म ॥

स्थानान्तरप्रभेदतः कामधातौ षट्त्रिंशत्सु स्थाना[4]न्तरेषु। रूपधातावष्टादशसु। आरूप्यधातौ चतुर्षु स्थानान्तरेषु जन्म। [2] तदभिसमस्याष्टपञ्चाशज्जन्मानि भवन्ति ॥

अभिजातिप्रभेदतः कामधातौ मनुष्येषु कृष्णा[5]भिजातिकं जन्म। यथा-पीहैकत्यश्चण्डालकुलेषु वा पुक्कस[6]कुलेषु वा रथकारकुलेषु वा वेणु[3]कारकुलेषु वा इति[7] यानि वा पुनरन्यानि नीचानि अधमानि[8] कृच्छ्राणि कृच्छ्रवृत्तीनि परीत्तानि परीत्तान्नपानभोजनानि इत्येवंरूपेषु[9] कुलेष्वभिजातो भवति। [4] त एव मनुष्यदुर्भगा इत्युच्यन्ते ॥

---

1 Tib lit *duḥkhato'pi* (sdug. bsṅal ba. dan) For *vyasana* in Tib we have generally žugs pa, or žen. pa, or phons pa, or ñon mons pa 2 MS. plural number.

3 MN i. 73, AK, III 4. The five *gatis* or states of existence into which a being may be reborn on death are *naraka*, *tiryagyoni*, *preta*, *manuṣya*, and *deva* Sometimes there are six with the addition of *asura* For details see AK, iii 11ff

4 In Tib *sthāna* (gnas) is omitted

5 The Tib word could not be ascertained.

6 Elsewhere *pukkaśa*, the earlier word being *pulkasa*, sometimes *pulkaśa*

7 Not supported by Tib. This is also below after *gṛhapati° kuleṣu*.

8 Tib dmah ba rnams, 'low', 'mean' ; MS *dhyāmāni* (?)

9 Tib. de. lta. bu. dag. gi. See below. MS gives a doubtful reading.

५३क, Tib. 105b. 6

शुक्ला[1]भिजातिकं जन्म। यथापीहैकत्यः क्षत्रियमहाशालकुलेषु ब्राह्मणमहाशालकुलेषु वा गृहपतिमहाशालकुलेषु वा[2] इति[5] यानि वा पुनरन्यानि कुलान्याढ्यानि महाधनानि महाभोगानि प्रभूतवित्तोपकरणानि प्रभूतक्षेत्र[3]स्वापतेयानि प्रभूतधनधान्यकोशकोष्ठागारसन्निचयानि इत्येवंरूपेषु कुलेष्वभिजातो भवति। [6] त एव मनुष्यसुभगा इत्युच्यन्ते ॥

नैवाकृष्णाशुक्लाभिजातिकं जन्म। यथापीहैकत्यस्तदुभयविवर्जितेषु मध्येषु कुलेष्वभिजातो भवति। कामावचरेषु[7] वा त्रिविधं जन्म। आसुरं जन्म। भूमिभागसंनिश्रितं जन्म। आकाशविमानसंनिश्रितं जन्म। रूपधातौ त्रिविधं जन्म। पृथग्जनानां ससंज्ञकं जन्म। [Tib 106b. 1] असंज्ञकं जन्म। शुद्धावासजन्म च। आरूप्यधातौ त्रिविधं जन्म। अप्रमाणसंज्ञिषु अकिञ्चनसंज्ञिषु नैवसंज्ञानासंज्ञिषु च देवेषु जन्म ॥

[2] तत्रात्मभावलोकप्रभेदतः। दशसु दिक्ष्वपरिमाणेषु लोकधातुष्वपरिमाणानां सत्त्वानामपरिमाणं जन्म वेदितव्यं ॥

[ व्यसनं ]

तत्र[1] व्यसनतः। यथोक्तं भगवता। यच्चतुर्षु महा[3]समुद्रेषूदकमतो बहुतरं युष्माकं दीर्घमध्वानं संधावता संसरता रुधिरं प्रस्यन्दितं प्रघारितं। तत्कस्य हेतोः। दीर्घरात्रं यूयं हस्तिनां सभागतायामुपपन्ना अश्वानां [4] मुष्ट्राणां गर्दभानामजामहिषवराहकुकुराणां[5] सभागतायामुपपन्नाः। तत्र युष्माभिर्बह्न्यङ्गप्रत्यङ्गच्छेदना[6]न्यनुभूतानि यत्र युष्माकं[7] प्रभूतं[8] रुधिरं प्रस्यन्दितं प्रघारितं। [5] यथा हस्त्यादीनां सभागतायामेवं मनुष्याणां।

---

1 For *śukla* Tib. lit. dkar (or dkar. po, dkar. ba) has here the fig. sense btsun. pa. 'noble'.

2 See note above. 3 Tib Žin. , MS *saṃtra* (?).

4 Tib. *evam* (de. ltar )

5 It is to be noted that the word *kurkura* for *kukkura* 'dog' which is in fact a Prakritic one is a Vedic one (Atharva Veda, VII 100 2)

6 MS *chedānı* for *chedanānı*.

7 In the Xylograph read khyed. kyı.

8 Tib. man ba , MS *prakṛtaṃ*

५२ क, Tib. 106a. 4

तत्र युष्माभि [५३ख] प्रभूतानि मातृव्यसनानि पितृव्यसनानि[1] भ्रातृव्यसनानि भगिनी[6]-व्यसनानि ज्ञातिक्षयो धनक्षयो भोगक्षयश्चानुभूत । तत्र युष्माक प्रभूतमश्रु प्रस्यन्दितं प्रघारित । तद्यथा रुधिर[2]मश्रु च एव मातुःस्तन्यपान द्रष्टव्य । [7] **इत्येवंभागीयो जन्मनो व्यसनप्रभेदो वेदितव्यः** ॥

[ **अनियमः** ]

**तत्रानियमतः । यथोक्तं** भगवता **तद्यथा** यदस्या [3]पृथिव्या[4] तृणकाष्ठ-शाखापत्र...[5] [Tib. 107a. 1] तश्चतुरङ्गुलमाला· कठिका[6] कृत्वा मातापितृ-परम्परायामु[पस्थाप]ये[7]रियं मे माता । तस्या अपि मे मातुरियं माता । अयं म पिता । तस्यापि मे पितुरयं पितेति[8] [2] क्षिप्रतरं खलु ताश्चतुरङ्गुलमाला कठिका अनेनोप-क्रमेण परिक्षयं पर्यादान[9] गच्छेयु· । नत्वेवाहं मातॄणा मातृपर्यन्तता वदामि । पितॄणा

---

1 Tib. first *piti*° and then *māti*°

2 MS repeats *yathā rudhiram*

3 Here in the Xylograph a few words are very illegible.

4 Tib adds *upari* (sten. na)

5 MS seems to read *sadamta* (?) The Xylograph is also very illegible

6 It appears to be a new word, After about two lines it is used once more. The Tib. word for it is dum. bu. meaning *śakala*, *khandā* 'a small piece', and so the meaning of the word *kathikā* is here quite clear, it means here small pieces of wood, etc So far as I can think the word *kathikā* seems to have been wrongly transcribed by the scribe. As Tib shows undoubtedly it is connected with a Neo-Indo-Aryan word *kāthikā* from *kāsthikā* used in such later Sanskrit works as the *Pañcatantra*, and *Kathā-saritsāgara*. In our povincial languages, such words as *tekāthi* 'a thing made of three pieces of wood' is well-known. The institution referred to in the text is peculiar and should be investigated.

7 MS *paramparāyamuyed*(?). The scribe suggests° *yāmu(tpāda) yet*. For the verb, °*uyed* in the MS we have bkod 'to arrange' in Tib. and generally in Skt the root √*rac* and *ni*-√*as* are found for it

8 In Tib we have first father then mother. See also below just in the following sentence. See above.

9 Tib omits it (yons. su. gtugs pa or hphyos pa ).

५३क, Tib. 106b. 5

च पितृपर्यन्तता । **यच्चोक्तं** यं यूयं सत्त्वं पश्यत दुःखितं [3] परमेण दुःखदौर्मनस्येन समन्वागतं यूयं तत्रावगच्छथ अस्माभिरप्येवंरूपाणि दुःखान्यनुभूतानि । यथा दुःखान्येवं सुखानि ।[1] [4] **यथोक्तं** नाहं तं पृथिवीप्रदेशं सुलभरूपं पश्यामि यत्र यूयं दीर्घस्याध्वनोऽत्ययान्न जातगतमृतपूर्वाः । नाहं तं सत्त्वं सुलभरूपं पश्यामि यो युष्माकं दीर्घस्याध्वनोऽत्ययान्न माता वाभूत् पिता वा भ्राता वा भगिनी वाचार्यो [5] वोपाध्यायो [वा][2] गुरुर्वा गुरुस्थानीयो वेति । **यथा चोक्तं** । एकपुद्गलस्यैकेन कल्पेन भवेदस्थनामस्थिराशिः । तद्यथा विपुलपार्श्वः पर्वतः स चेत्संहृतो[3] भवेत् । संहृतानि न विनश्येयुर्न च [6] पूलीभवेयुः ।

## [ प्रवृत्तिः ]

**तत्र जन्मनः प्रवृत्तिः कतमा । यथात्मभावानां प्रतीत्यसमुत्पादो भवति सैषां[4] प्रवृत्तिरित्युच्यते ।**

## [ प्रतीत्यसमुत्पादः ]

**प्रतीत्यसमुत्पादः कतमः ।** [7] **उद्दानं ।**

**शरीरमुखमर्थश्च विभङ्गक्रममचोदना ।**
**निरुक्तिः प्रत्ययत्वं च प्रत्ययत्वप्रभेदतः ।**
**सूत्रान्तसंग्रहश्चेति विचित्रः पश्चिमो भवेत् ॥**

**शरीरं कतमत् । समासतस्त्रिभिराकारैः प्रतीत्यसमुत्पादस्य** [Tib 107b, 1] **व्यवस्थानं भवति । यथा पूर्वान्तान्मध्यान्ते सम्भवति । यथा च मध्यान्तादपरान्ते सम्भवति । यथा च मध्यान्ते सम्भूतो वर्तते व्यवदानाय च परैति ॥**

**कथं पूर्वान्तान्मध्यान्ते सम्भवति** [2] **सम्भूतश्च मध्यान्ते वर्तते । यथापीहैकत्येन पूर्वमविदुषाविद्यागतेनाविद्याप्रत्ययं पुण्यापुण्यानिञ्ज्यं[5] कायवाङ्मनःकर्म कृतं** [3] **भवत्युपचितं । तत्कर्मोपभोगं चास्य** |५४क| **विज्ञानमामरण-**

---

1 Tib adds here sñam. du bthah (?) śes. pai gyis śig. ces. gsuns. pa. dan, but it is not quite clear to me.

2 Tib ham. 3 Tib sdud. pa ; MS *saṃhārako.*

4 Tib. de. dag. gi ; MS *eṣā.*

5 There are two forms of this word *ānejya* and *āniñjya* either from √*ej* 'to tremble' or √*iṅg* 'to move' as in the *Abhidharmakośavyākhyā.* Both *karman* and *dhyāna* are *āniñjya.* See AK, iv. 107 ; vi,. 177 ; viii, 161 , MV, 334-335.

५३ख, Tib. 107a. 2

समयादनुवृत्तं [1]भवति प्रतिसन्धिविज्ञानहेतुभूतं। अध्यात्मबहिर्धा तृष्णा चास्य विज्ञानस्य [4] फलाभिनिर्वृत्तिकाले सहायभावेन प्रत्युपस्थिता भवति। स कालं कृत्वा पूर्वान्ताद्वर्तमानेऽध्वन्यात्मभावमभिनिर्वर्तयत्यनुपूर्वेण मातुःकुक्षौ हेतुविज्ञानं प्रतिसन्धिफलविज्ञानं यावदेव [5]कललत्वा[2]दिभिरवस्थाविशेषैरुत्तरोत्तरैस्तस्य गर्भगतस्य नामरूपस्य यावज्जीर्णत्वाय। स[मनन्त]र[3] प्रतिसन्धिबन्धाच्च तस्य विज्ञानस्य यत्तदुत्पत्तिसंवर्तनीय [6] कर्म तद्वृत्तफलं भवति विपाकतः।[4] तद्विपाकविज्ञानं तदेव नामरूपं प्रतिष्ठाय वर्तते। तच्च षट्स्वाश्रयेषु प्रतिष्ठितं वर्तते। येनोच्यते नामरूपप्रत्ययं [7] विज्ञानमिति। सहभूतं चेन्द्रियरूपं समनन्तरविरुद्धं च नाम षण्णां विज्ञानानां यथायोगमाश्रयो यदाश्रित्य यावज्जीवं विज्ञानस्य प्रवृत्तिर्भवति। पञ्चानां रूपिणामिन्द्रियाणां [Tib 108a. 1] इन्द्रियमहाभूतानि। इन्द्रियाधिष्ठानं च महाभूतजनितं रूपं। यच्च नाम येनोपादत्तानीन्द्रियाणि सन्तानपतितं प्रवाहेण[5] प्रवर्तते। तदुभयमभिसमस्याश्रयो [2] भवत्यनुप्रवृत्तये।[6] एवं हि विज्ञानप्रत्ययं नामरूपं नामरूपप्रत्ययं च विज्ञानं। वर्तमानेऽध्वनि[7] योगे (?) वर्तते यावदायुः। एवं [3] हि पूर्वान्तान्[8]मध्यान्ते संस्काराणां प्रतीत्यसमुत्पादसम्भवो भवति। सम्भूतानां च मध्यान्ते प्रवृत्तिः॥

तत्र जरायुजायां[9] यौनावयं प्रवृत्तिक्रमः। अण्डजसंस्वेदजायां[10] [4] मातुः कुक्षिवर्जितमन्यद्वेदितव्यं। रूपिषु सत्त्वेषु कामावचरेषु रूपावचरेषु औप-

---

1 Tib *amarana* for *āmarana* reading nam. ma. sihi dus kyis. bar. du rjes. sū. hjug. par. hgyur. ro. MS *āvarana*°.

2 For *kalala*-Tib. *arbuda*-(mer mer. po).

3 Before *pratisandhi* MS appears to read *saha*. Tib. has ma. thag. tu. skyes suggesting lit. *samanantarajāta*.

4 After *tad* Tib. adds *api* (*yan*).

5 Tib. rgyun. gyis , MS *prabhāgena*

6 In MS *anupravrttaye* is omitted.

7 MS *nanu* reads *kalapikā yoga vartate*. It is not clear, nor is so the Tib text which reads mdun khyim gyi. tshul. du

8 Tib snon. gyi. mthah nas , MS *pūrvān madhyā*°

9 Tib. mnal. nas. skye. bahi ; MS *jarājva jāyām*.

10 Acc to Tib. lit. *aṇḍajāyām saṃsvedajāyāṃ* ca (sgo. na. las. skye. ba. dan/drod gśer. las. skye. ba.

५४ क, Tib. 107b. 3

पादुकायां योनौ पूर्णेन्द्रियः प्रादुर्भवतीत्ययं विशेषः। आरूप्येषु |5| पुनर्नामाश्रितं रूपं जीवाश्रितं च विज्ञानं विज्ञानाश्रितं नामरूपबीजं च प्रवर्तते। यतः पुनर्बीजात्समुच्छिन्नस्यापि रूपस्यायत्यां प्रादुर्भावो भवत्यय|6|मत्रापि विशेषः। पुण्येन च कर्मणा कामावचरेषु देवमनुष्येषूत्पद्यते। अपुण्येनापायेषु। आनिञ्ज्येन रूपारूप्येषु॥

[7| कथं मध्यान्तादपरान्ते संस्काराणां प्रतीत्यसमुत्पादसम्भवो भवति कथं चासम्भवः। असम्भवाच्च व्यवदानं। स तथा मध्यान्ते सम्भूतः पुद्गलो [Tib. 108b. 1| द्विविध पूर्वकर्मफलं प्रत्यनुभवति। आध्यात्मिकं च विपाकफलं विषमनिर्जातं च वेदित[1]मधिपतिफलं। सोऽसद्धर्मश्रवणं वागम्य पूर्वाभ्यासं वा द्विविधेऽपि फले[2] संमूढो भवति। [2| सोऽध्यात्मं विपाकफले संमूढः पुनर्भावाभिनिर्वृत्तिं दुःखतो यथाभूतं न जानाति। स पूर्वान्तिकीं चापरान्तिकीं चाविद्यामधिपतिं कृत्वा पूर्ववत् |3] संस्कारान् करोत्युपचिनोति। तस्य तद्विज्ञानमभिनवं कर्म कुर्वतस्तत्कर्मोपगं भवति दृष्ट एव धर्मे। एवमविद्याप्रत्यया उत्पद्यन्ते संस्कारप्रत्ययं च विज्ञानं। [4| तच्च विज्ञानं दृष्टे धर्मे हेतुभूतमायत्या[५४क|मभिनिर्वृत्तिविज्ञानफलपरिग्रहात्। सर्वं च विज्ञानमधिकृत्य षड्विज्ञानकाया इत्युच्यन्ते। [5] तच्च विज्ञानमायत्यां[3] पौनर्भविकनामरूपबीजोपगतं। तदपि नामरूपबीजमायतिपौनर्भविकषडायतनबीजोपगतं। तच्च षडायतनबीजमायति| 6 ]पौनर्भविकस्पर्शबीजोपगतं। तच्च स्पर्शबीजमायतिपौनर्भविकवेदित[4]बीजोपगतं। अयं तावत् पुनर्भवस्य मध्यान्ते आक्षेपको हेतुर्वेदितव्यो येन वि[7]ज्ञानाद्यो वेदितपर्यवसानः कृत्स्न एवात्मभाव आक्षिप्तो भवति॥

---

1 The reading *veditam* could not be ascertained from Tib. as it is very illegible here

2 MS *phalaṃ* ; Tib. hbras. bu. la

3 Tib phyi ma la, It means *āyatyām* and shows no compound here. The compound if made will be the 7th case *Tatpuruṣa* The case is the same also below.

4 Tib. tshor. ba. is *vedita, vedanā.*

स पूर्वकेण[1] विपाकफल[2]सम्मोहेनैव पुनर्भवमाक्षिप्य द्वितीयेन[3] विषयनिर्जातफलसम्मोहेन विषयवेदना[Tib. 109a. 1]लम्बनां तृष्णामुत्पादयति यथा तृष्णया कामपर्येषणां वापद्यमानो भवपर्येषणां वा कामोपादानं वोपाददाति दृष्टिशीलव्रतो[4][2]पादानं वा। उपात्ते चोपादाने तृष्णोपादानसहितसङ्गतः पूर्वक आक्षेपको हेतुर्भव इत्युच्यते। उपपत्त्यभिनिर्वृत्तिहेतुसंगृहीतस्य च भवस्यानन्तरं कालं कृतवतो यथाक्षिप्तेनाक्षेपहेतुना [3] विज्ञानादीनां संस्काराणां वेदितपर्यन्तानां प्रादुर्भावो भवत्यनुक्रमशो वा सकृद्वा। एवं दृष्टे धर्मे अविद्यासंस्पर्शजा वेदितप्रत्यया तृष्णा। तृष्णाप्रत्यय[4]मुपादानं। उपादानप्रत्ययो भवः। भवप्रत्यया जातिः। जातिप्रत्ययाश्च जराव्याधिमरणादयो दुःखविशेषाः संमुखीभवन्ति[5]। क्वचिदुपपत्त्यायतने[6] क्वचिद्वीजानुषङ्गतो [5] वेदितव्यः। एवं मध्यान्ते अविद्याप्रत्ययान् संस्कारान्[7] वेदनाप्रत्ययां च तृष्णां प्रतीत्यापरान्ते संस्काराणां समुदयो भवति। सचेत्पुनः परतो घोषं[8] पूर्वसंस्कारं वा दृष्टे धर्मे आगम्य [6] योनिशो [द्वि][9]विधान्फलभूतान्संस्कारान्मनसि करोति तेषां च हेतुं तेषां च निरोधं तेषां च निरोधगामिनीं प्रतिपदं। योनिशो [10]मनस्कारा-

---

1 Tib. gcig. śos. kyis Sometimes it is translated by *itarena* as in CS, 186.

2 Tib. sna mas

3 Tib. rnam. par. smin. pahi. hbras bu. la, rmons. pa., MS *phalaṃ sammohena.*

4 In *Śīlavrata* (Tib. tshul. khrims. dan brtul žugs), *-vrata-* is omitted in MS.

5 This word is omitted in MS.

6 Tib skye.bahi. gnas. kha. cig. tu. Generally *āyatana* is translated by skye mched. After this Tib adds *pūrvaṃ* (snon. du).

7 MS *°yā saṃskārā.*

8 Tib. sgra.

9 Tib. rnam. pa. gñis. la.

10 Tib. tshul. bžin. yid. la. byed. na. MS *pratipadamayoniśo.*

५८ख, Tib. 108b. 7]

न्वयाच्च [1]सम्यग्दृष्टिमुत्पादयति। विशुद्ध च सत्येषु क्रमेण शैक्षा[7]शैक्षं ज्ञानदर्शनं प्रतिलभते। स तेन ज्ञानदर्शनेनाशेषां तां चाविद्यां प्रजहाति तां च तृष्णां। तस्याश्च प्रहाणाद्यत्तदालम्बनं यथाभूतमप्रजाननोऽविद्यासंस्पर्शं वेदितव्यं[2]। [Tib 109b 1] तत्प्रहीणं भवति। तस्य प्रहाणादविद्याविरागात्प्रज्ञाविमुक्तिः साक्षात्कृता भवति दृष्ट एव धर्मे। या चाविद्यासंस्पर्शजा वेदितसम्प्रयुक्ते चित्ते [2] सम्प्रयुक्ता तृष्णा रागश्च तस्य तस्माच्चित्ताद्विसंयोगाद् रागविरहा[3]च्चेतोविमुक्तिः साक्षात्कृता[4] भवति। तस्याविद्यानिरोधाद्ये ते तस्यामप्रहीणायामविद्यायां संस्कारविज्ञानादयो वेदनापर्यन्ता [3] अपरान्तमारभ्य ते नोत्पद्यन्ते। अनुत्पत्तिधर्माणश्च भवन्ति। तस्मादविद्यानिरोधात्संस्कारनिरोधोऽनुपूर्वेण यावद्विपाकस्पर्शनिरोधाद्विपाकज[4]वेदनानिरोधो भवतीत्युच्यते। दृष्टे धर्मेऽविद्यानिरोधादविद्यासंस्पर्शनिरोधः। अविद्यासंस्पर्शनिरोधादविद्यासंस्पर्शज[5]वेदितनिरोधात्तृष्णा [५९क] निरोधः। तृष्णानिरोधात्पूर्ववदनुत्पत्तिधर्मतयोपादानाद्य उपायासपर्यवसानाः संस्कारा निरुद्धा इत्युच्यन्ते। एवमेषां दृष्टधर्मे [6] संस्काराणामप्रवृत्तिर्भवति। अप्रवृत्तेश्च दृष्टे धर्मे सोपधिशेषे निर्वाणधातौ निर्वाणप्राप्तिर्भवति। तस्य तस्मिन्समये विज्ञानप्रत्ययं च नामरूपं नामरूपप्रत्ययं च [7] विज्ञानं परिशिष्टं भवति परिशुद्धं पर्यवदानं। तस्य यावत्सविज्ञानकः कायोऽवतिष्ठते तावद्विसंयुक्तो वेदनां वेदयति न संयुक्तः। स चास्य [Tib. 110a 1] [स]विज्ञानकः कायो यावत्पूर्वकर्माक्षिप्तमायुस्तावदवतिष्ठते। यदा चास्यायुषः क्षयाद्विज्ञानमुपात्तं कायं विजहाति तस्य जीवितेन्द्रियं चोर्ध्वमस्माज्जीवितेन्द्रियादशेषं [2] पर्यादीयते नोत्तरत्र विपच्यते। तच्च विज्ञानं सह सर्ववेदितैरिह च स्वस्व[5]निरोधादन्यत्र च पूर्वमेव हेतुनिरोधादप्रतिसन्धितोऽपरिशेषं

---

1 Tib. adds lit. *tena manaskārahetunā* (des. tshul. bžin. yid. la. byas. pahi rgyus). Tib does not support *anvayāt*.

2 Tib. here is illegible.

3 MS adds *drstadharma-*

4 Tib. rnam. par. śes pa dan bcas.

5 Tib. ran gi. ran gis, MS *svarasa-*.

निरुद्धं भवति। [3] अयं च निरुपधिशेषो निर्वाणधातुरत्यन्तशान्तं पदं यस्यार्थे निर्वाणोपगं निर्वाणपर्यवसानं भगवतोऽन्तिके उशन्ति[1] ब्रह्मचर्यं ॥

[4] तदिदं त्रिभिराकारैः प्रतीत्यसमुत्पादस्य व्यवस्थानं विस्तरेण प्रयुक्तं भवति। पूर्वान्तान्मध्यान्ते प्रवृत्तितो मध्यान्तादपरान्ते प्रवृत्तितो मध्यान्ते च प्रवृत्तिविशुद्धितः। [5]इतीदं प्रतीत्यसमुत्पादस्य शरीरं ॥

[ मुखं ]

मुखं कतमत्। अष्टाभिर्मुखैः प्रतीत्यसमुत्पाद प्रवर्तते। अध्यात्मं विज्ञानोत्पत्तिमुखेन। बहिर्धा सस्य[2]निष्पत्ति[3]मुखेन। सत्त्व[ 6 ]लोकच्युत्युत्पत्तिमुखेन भाजनलोकसंवर्तविवर्तमुखेन आहारोपस्तम्भ[4]मुखेन कर्मस्वकतामधिपतिं कृत्वा इष्टानिष्टकर्मतदनुरूप [7]फलोपभोगमुखेन प्रभावमुखेन व्यवदानमुखेन च।

[ अर्थः ]

प्रतीत्यसमुत्पादार्थः कतमः। निःसत्त्वार्थः प्रतीत्यसमुत्पादार्थः। सति निःसत्त्वेऽनित्यार्थः। सत्यनित्यत्वे [Tib. 110b. 1] इत्वरप्रत्युपस्थापनार्थः। सतीत्वरप्रत्युपस्थाने परतन्त्रार्थः। सति परतन्त्रे निरीहार्थः। सति निरीहार्थे हेतुफलप्रबन्धानुपच्छेदार्थः। [2] सति [हेतुफल][5] प्रबन्धानुपच्छेदे अनुरूपहेतुफलप्रवर्तनार्थः। सत्यनुरूपहेतुफलप्रवर्तने कर्मस्वभावार्थः प्रतीत्यसमुत्पादार्थः।

कस्यार्थस्य परिदीपनार्थं प्रतीत्यसमुत्पादव्यवस्थानं। हेतु[6]प्रत्यय[3]परिगृहीत[7] स्वसंक्लेशव्यवदानार्थस्य परिदीपनार्थं ॥

---

1 So the MS. Lit. it may mean *icchanti* from √*vaś* 'to desire.' Tib. bsten. pa, *sevante*, here in the sense of *caranti*.

2 So the MS, Tib. reads lo tog, meaning *sasya* 'corn'.

3 Tib. hgrub pahi.

4 Tib bstan. pa *upastambha* in the sense of *anusarana, pratisarana*.

5 Tib rgyu. dan. hbras bu. meaning *hetu-phala*.

6 Tib. adds here *āha* (smras) After it for *hetu* MS *ahetu*.

7 Tib omits it.

५९क, Tib. 110a. 2]

[ विभागः ]

विभागः कतमः। यत्पूर्वान्तेऽज्ञानमिति विस्तरेण सूत्रं। तत्र पूर्वान्तेऽज्ञानं कतमत्। [4] अतीतानसंस्कारानयोनिशः कल्पयतः किं-न्वहमभूवमतीतेऽध्वन्याहोस्विन्नाहमभूवमतीतेऽध्वनि। को न्वहमभूवं। कथं वाभूवमिति यदज्ञानं।

[5] अपरान्तेऽज्ञानं कतमत्। अनागतान्संस्कारानयोनिशः कल्पयतः [५९ख] किं न्वहं भविष्याम्यनागतेऽध्वन्याहोस्विन्नाहं भविष्याम्यनागतेऽध्वनि। किं [6] भविष्यामि कथं भविष्यामीत्यज्ञानं। पूर्वान्तापरान्तेऽज्ञानं कतमत्। अध्यात्ममयोनिशः कथंकथीभवतः के सन्तः के भविष्यामः। अयं सत्त्वः कुत आगत.। इत [7] श्च्युतः कुत्र गामी भविष्यतीति यदज्ञानं। अध्यात्ममज्ञानं कतमत्। प्रत्यात्मिकान्संस्कारानयोनिश आत्मना मनसि कुर्वतो यदज्ञानम्। बहिर्धाज्ञानं कतमत्। वाह्यान् [Tib. 111a. 1] सत्त्वसंख्यातान्संस्कारानात्मीयतोऽयोनिशो मनसि कुर्वतो यदज्ञानं। अध्यात्मबहिर्धाऽज्ञानं कतमत्। पारसान्तानिकान्संस्कारान्मित्रा [ 2 ]मित्रोदासीनतोऽयोनिशः कल्पयतो यदज्ञानं। कर्मण्यज्ञानं कतमत्। कर्मकर्तार[1]मयोनिशः कल्पयतो यदज्ञानं। विपाकेऽज्ञानं कतमत्। [3] विपाकफलसंगृहीतान्संस्कारान्वेदकतोऽयोनिशः कल्पयतो यदज्ञानं। कर्मविपाकेऽज्ञानं कतमत्। वितथं कर्म तत्फलं चायोनिशः कल्पयतो [4 ]यदज्ञानं। बुद्धेऽज्ञानं कतमत्। बुद्धानां बोधिममनसि कुर्वतो वा मिथ्या या मनसि कुर्वतः प्रमाद्यतो वा काङ्क्षतो वापवदतो वा यदज्ञानं। [5] धर्मेऽज्ञानं कतमत्। धर्मस्य स्वाख्यातता[2]ममनसि[3] कुर्वतो वा मिथ्या वा मनसि कुर्वतः प्रमाद्यतो वा काङ्क्षतो वापवदतो वा यदज्ञानं। सङ्घेऽज्ञानं कतमत्। [6] सङ्घस्य सुप्रतिपत्तिममनसि कुर्वतो वा मिथ्या वा मनसि कुर्वतः प्रमाद्यतो वा काङ्क्षतो वापवदतो वा यदज्ञानं। दुःखेऽज्ञानं कतमत्। दुःखं [7] दुःखतोऽमनसि कुर्वतो वा मिथ्या वा मनसि कुर्वतः

---

1 Tib. not clear.

2 For this Tib. *suraksanam* (?) reading legs par. bsunsruns.

3 Tib wrongly omits here mi.

प्रमाद्यतो वा काङ्क्षतो वापवदतो वा यदज्ञानं यथा दुःखे एवं समुदये निरोधे मार्गे [Tib. 111b. 1] अज्ञानानि द्रष्टव्यानि ॥

हेतावज्ञानं कतमत्। अहेतुकं वा कल्पयतो विषम[1]हेतुं वा ईश्वरप्रकृतिपुरुषान्तरादिकं[2] वायोनिशः कल्पयतो यदज्ञानं। यथा हेतावेवं हेतु[2]-समुत्पन्नेषु संस्कारेषु ॥

ते पुनः कुशला अनवद्यत्वात्। अकुशलाः सावद्यत्वात्। सेवितव्या हितत्वात्। असेवितव्या अहितत्वात्। सावद्याः कृष्णत्वात्। [3] अनवद्याः शुक्लत्वात्। सप्रतिभागा व्यामिश्रत्वात् ॥

षट्सु स्पर्शायतनेषु यथाभूतसंप्रतिवेधेऽज्ञानं कतमत्। अधिगमे विपर्यस्तचेतस आभिमानिकस्य [4] यदज्ञानं। तदेतदभिसमस्य[3] विंशत्याकारमज्ञानं भवति। पुनरन्यत्सप्तविधमज्ञानं। अध्वसंमोहो वस्तुसंमोहः सङ्क्रान्तिसंमोहः अग्रसंमोहस्तत्त्वसंमोहः [5] संक्लेशव्यवदानसंमोहोऽभिमानसंमोहश्च ॥

यच्च[4] विंशतिविधमज्ञानं यच्च सप्तविधमज्ञानं तत्र केन कस्य संग्रहो द्रष्टव्यः। त्रिभिः प्रथमैरज्ञानैः [6] प्रथमस्यैकस्य संग्रहः। पुनस्त्रिभिरनु[5] द्वितीयस्य। पुनस्त्रिभिरनु चतुर्थस्य। पुनश्चतुर्भिरनु पञ्चमस्य। पुनः षड्भिरनु षष्ठस्य। पश्चिमेनैकेन [7] सप्तमस्य ॥

पुन[६०क]रन्यत्पञ्चाकारमज्ञानं। अर्थसंमोहो दृष्टिसंमोहः प्रमादसंमोहस्तत्त्वार्थसंमोहोऽभिमानसंमोहश्च। यच्चैकान्तविंशतिविधमज्ञानं यच्च पञ्चविधं [112a 1] कतमेन कस्य संग्रहो द्रष्टव्यः। दृष्टिसम्मोहेन पूर्वकाणां षण्णां। हेतुसमुत्पन्नेषु च धर्मेष्वज्ञानस्य संग्रहो द्रष्टव्यः। प्रमादसंमोहेन कर्मणि [2] विपाके तदुभये चाज्ञानस्य संग्रहः। तत्त्वार्थसंमोहेन बुद्धादिषु मार्गसत्य-

---

1 Tib. mi mthun- paḥi.

2 Tib la. sogs. MS °*ntarāyikam*.

3 Here and also below after this occurs *ekānta* in the MS, but there is nothing for it in Tib.

4 See the preceding note.

5 This word *anu* is found here and below in each case in the MS, but its meaning is not clear In the Tib text there is hog. ma. meaning *tataḥ* 'after that', certainly here for *punaḥ*. But for *anu* which may mean 'after that' (*paścāt*) there is nothing in Tib.

५९,ख, Tib. 111a. 7]

पर्यवसानेषु अज्ञानस्य संग्रहः। अभिमानसंमोहेन पश्चिमस्य [संग्रहः][1]। अर्थसंमोहेन [3] पुनः[2] सर्वेषां संग्रहो द्रष्टव्यः ॥

अज्ञानमदर्शनमनभिसमयस्तमःसंमोहोऽविद्या[3] इतीमे षडविद्यापर्यायाः सप्तविधे संमोहवस्तुनि [4] यथाक्रमं द्रष्टव्याः। पश्चिमे तत्त्वसंमोहवस्तुनि[4]। एवं वस्तु कृत्वापि पश्चिमोऽविद्यान्धकारपर्यायस्तत्र द्रष्टव्यः ॥

अपरः पर्यायः। श्रुतमय्याश्चिन्ता[5]मय्या भावनामय्याश्च प्रज्ञाया विपक्षेण त्रयः पर्याया यथाक्रमं [ योज्यन्ते ][5]। तस्या एव विपक्षभूताया मृदुमध्याधिमात्रत्वादपरे पुनस्त्रयः पर्याया [6] इति विपक्षप्रभेदतश्च स्वभाव प्रभेदतश्च षट् पर्यायाः ॥

कायसंस्काराः कतमे। कायकर्म कामावचरं रूपावचरं [7] पुण्यापुण्यसंख्यातमध ऊर्ध्वं पुनरानिञ्ज्यसंख्यातं। वाक्संस्काराः कतमे। वाक्कर्म। शेषं पूर्ववद्द्रष्टव्यं। मनःसंस्काराः कतमे। मन [Tib 112b. 1]स्कर्म। तत्[6] कामधातौ पुण्यापुण्यं नानेञ्ज्यं द्वयोरुपरिमयोर्धात्वोरानेञ्ज्यमेव च ॥

चक्षुर्विज्ञानं कतमत्। आयत्यां चक्षुरिन्द्रियाश्रया या रूप[2]प्रतिविज्ञप्तिर्यत्पुण्यापुण्यानेञ्ज्यं परिभावितबीजभूतं विज्ञानं यच्च तद्बीजसमुद्भूतं। यथा चक्षुर्विज्ञान[3]मेवं श्रोत्रघ्राणजिह्वाकायमनोविज्ञानानि द्रष्टव्यानि। आश्रयविषयकृतश्चैषां प्रतिविज्ञप्तिविशेषो द्रष्टव्यः। तत्पुनः कामावचरं षड्विधं। [4] रूपावचरं चतुर्विधं। आरूप्यावचरमेकविधमेव ॥[7]

---

1 Tib. bsdus.     2 Omitted in Tib

3 After *avidyā* MS has *andhakāram* for which there is nothing in Tib If it is accepted, the following number six (*ṣaṣṭha*) would be seventh (*saptama*) not supported by Tib in which we have actually sixth (drug po.). But *avidyāndhakāra* seems to be a compound word See below. It may be noted that in Tib for *avidyā iti* there is lit. *avidyāyāḥ saptama iti* (ma. rig. pahi. bdun. pa. žes. bya. ba.) It is however not clear.

4 Tib. omits *tattva-* before *moha* and adds *-dvaye* as °*vastu-dvaye* (gñi tha. ma. gñis )

5 Tib. sbyar. ro.

6 Tib adds here *ca* (yaṅ).

7 Tib. omits *eva*.

वेदनास्कन्धः कतमः। अनुभवजातिः सर्वा।[1] स च त्रैधातुकावचरः। संज्ञास्कन्धः कतमः। सजाननाजातिः सर्वा। संस्कारस्कन्धः कतमः। [5] चित्ताभिसंस्कारमनस्कर्मजातिः। विज्ञानस्कन्धः कतमः। विजाननाजातिः सर्वा।[2] एतेऽपि[3] स्कन्धास्त्रैधातुकाव[6]चरा द्रष्टव्याः॥

चत्वारि महाभूतानि कतमानि। पृथिवीधातुरब्धातुस्तेजोधातुर्वायुधातुः। तेऽपि धातुद्वये[4]। चत्वारि महाभूतान्युपादाय। रूपं [7] कतमत्। दश-रूपीण्यायतनानि। धर्मायतनपर्यापन्नं च रूपं दश कामावचराणि प्रज्ञप्तिपतितं च धर्मायतनरूपं अष्टौ रूपावचराणि धर्मायतनपर्यापन्नं च। [Tib. 113a 1] सर्व[5] तदपि द्विविध। विज्ञानबीजपरिगृहीतबीजभूतं च तदभिनिर्वर्त्तितफलभूतं च॥

[६०ख] चक्षुरायतनं कतमत्। चक्षुर्विज्ञानसंनिश्रयो [2] रूपप्रसादो येन रूपाणि पश्यत्पश्यति द्रक्ष्यति[6] वा। यथा चक्षुरायतनमेवं श्रोत्रघ्राणजिह्वा-कायमनआयतनानि यथायोगं द्रष्टव्यानि। सर्वेषां च [3] कालत्रय-निर्देशेन कर्म निर्देष्टव्यं। तदपि द्विविधं नामरूपपरिगृहीतबीजभूतं तदभि-निर्वर्तितफलभूतं च कामावचरं। रूपावचराणि [4] पञ्च। षष्ठं त्रैधातु-कावचरं॥

चक्षुःसंस्पर्शः कतमः। त्रिकसमवायजा विषयशुभं[7] प्रतिविषय[8] लक्षण-निर्देशो [5]ऽवगन्तव्यः। ते पुनर्द्विविधाः। षडायतनबीजपरिगृहीतबीज-भूताश्च तदभिनिर्वर्त्तितफलभूताश्च। कामावचराः सर्वे। रूपावचराश्चत्वारः। [6] आरूप्यावचर एकः॥

---

1 For *anu°sarvā*. Tib *sarvo' pi anubhavaprakārah* (thams, cad. kyan rmyoṇ bahi. rnam, pa yin. te). So below

2 After *sarvā* MS adds *iti* not in Tib.

3 Tib. omits *api*.

4 So the Tib. Text: de dag ni. khams gñis. na. yod. do.

5 Omitted in Tib

6 Tib. literally *ca* (dan.) for *vā*.

7 The MS is corrupt here, the Tib. text is also illegible.

8 MS *viṣayaṃ* ; Tib. yul gyi mtshan. ñid.

६०क, Tib. 112b. 4

सुखा वेदना कतमा। यत्सुखस्थानीयमिन्द्रिय[1] विषयं प्रतीत्योत्पद्यते सातं वेदयितं वेदनागतं। दुःखा वेदना कतमा। यद्दुःखस्थानीयं [द्रयं][2] [7] प्रतीत्योत्पद्यतेऽसातं वेदयितं। अदुःखासुखा वेदना कतमा। यददुःखासुखस्थानीयं द्वयं प्रतीत्योत्पद्यते [Tib 113b. 1] नैव सातं नासात वेदयितं वेदनागतं। तिस्रः कामचर्याः। द्वे रूपावचर्ये तृतीयाद् यावद्ध्यानात्। अदुःखासुखा चतुर्थाद्ध्यानादूर्ध्वं यावन्नैवसंज्ञानासज्ञा[2]यतनात् ता अपि वेदना द्विविधाः स्पर्शबीजपरिगृहीतबीजभूतास्तदभिनिर्वर्तितफलभूताश्च ॥

काम[3]तृष्णा कतमा। कामावचरान् संस्कारान्प्रतीत्य कामावचरेषु क्लिष्टा प्रार्थना यया कामधातौ दुःखमभिनिर्वर्तयति। रूपतृष्णा कतमा। या [4] रूपावचरान्संस्कारान्प्रतीत्य रूपावचरेषु संस्कारेषु क्लिष्टा प्रार्थना यया रूपधातौ दुःखमभिनिर्वर्तयति। आरूप्यावचरा तृष्णा [5] कतमा। यारूप्यावचरान्संस्कारान्प्रतीत्यारूप्यावचरेषु संस्कारेषु क्लिष्टा प्रार्थना यया रूपधातौ दुःखमभिनिर्वर्तयति ॥

[6]कामोपादानं कतमत्। यः कामेषु च्छन्दरागः। दृ ष्टुपादानं कतमत्। सत्कायदृष्टिं स्थापयित्वा तदन्यासु दृष्टिषु च्छन्दरागः। शीलव्रतोपादानं कतमत्। शीलव्रतमिथ्याप्रणिहिते यश्छन्दरागः। आत्मोपादानं[4] कतमत्। सत्कायदृष्टौ यश्छन्दरागः। प्रथमेन [Tib. 114a. 1] कामधातावेव दुःखमभिनिर्वर्तयति। अवशिष्टैः पुनस्त्रैधातुके ॥

कामभवः कतमः। कामावचरपूर्वकालभवः कर्मभवो [2] मरणभवोऽन्तराभव उपाधिभवो नरकतिर्यक्प्रेतदेवमनुष्यभवाश्च कामभव इत्युच्यते। स पुनः पूर्वकृतसंस्कारक्लेश[3]परिग्रहप्रभावितः ॥ रूपभवः कतमः ॥ नरक-

---

1 According to Tib. (dban po dan yul) it is to be taken as a *dvandva* compound,

2 Tib. gñis. po la. Cf. *indriyaviṣayam* with regard to *sukhā vedanā*.

3 Tib. accusative (rnams. la.) in both the words, but in MS ablative singular. So below.

4 Tib. *ātmavādopā°* (bdag. tu. smra. baḥi.).

तिर्यक्प्रेत[1]मनुष्यभवान् स्थापयित्वा तदन्यो[2] रूपभवो द्रष्टव्यः॥ आरूप्यभवः [4] कतमः। अन्तराभवं[3] स्थापयित्वा तदन्यभवसंगृहीत[4] आरूप्यभवो द्रष्टव्यः॥ किमधिकृत्य सप्त भवा व्यवस्थापिता नरकतिर्यक्प्रेतदेवमनुष्य [5]-कर्मान्तराभवाः। त्रीणि कृत्यान्यधिकृत्य। आक्षेपको भव एकः। भव-संप्रापको भव एकः। फलोपभोजका भवाः[5] पञ्च॥

[6] जातिः कतमा। या जरायुजायामण्डजायां च योनौ तत्प्रथमाभि-निर्वृत्तिः। संजातिः कतमा। या तत्रैव आत्मभावपरिपूरिरनिःसृतस्य (?)। [६१क] भवक्रान्तिः कतमा। या तस्मान्निः[7]सृतिः। अभिनिःसृतिः कतमा। या निःसृतस्य वृद्धिः। प्रादुर्भावः कतमः। संस्वेदजौप[6]पादुकायां योनौ सकृदेव सम्भवः। स्कन्धप्रतिलाभः कतमः। य आस्वेव योनि-[Tib. 114b 1]-ष्ववस्थासु च [7]पञ्चानामुपादानस्कन्धानां [सम्भवः]॥

धातुप्रतिलम्भः कतमः। या तेषामेव स्कन्धानां हेतुप्रत्ययपरिगृहीतता। आयतनप्रतिलम्भः कतमः। या तेषामेव स्कन्धानां तदन्य[2]प्रत्ययपरि-गृहीतता। स्कन्धाभिनिर्वृत्तिः कतमा। या तेषामेव स्कन्धानामाहारकृता पुष्टिरुपचयः। प्रतिदिन[8]जीवितेन्द्रियप्रादुर्भावः कतमः। यत्तेषामेव स्कन्धाना [3]मायुःशेषवशादवस्थानं॥

अस्याः पुनर्जातेः समासार्थः कतमः। यश्च जातेः स्वभावः यत्र च जायते यैश्च हेतुप्रत्ययैः परिगृहीतः येन चोपस्तम्भेनाहृतेन [4] सहजेन च म्रियत इत्ययं समासार्थः।

---

1 MS *pretya*. In Tib. read dags for dwags.

2 Tib de. las. gžan. pa , MS *tadanye*.

3 MS adds here *bhūyaḥ* not supported by Tib.

4 Tib de. la gžan pahi. srid. pas. bsdus. pa. ni.

5 Tib. srid. pa., MS *bhāvaḥ*.

6 Tib. adds *ca* 'and' (dan) between the words; MS °*svedajopa. bā*.

7 Tib. skye. gnas, ḥdi. dag. ñid. dan. gnas, skabs. rnams su. MS *avasthāsrava pa°*.

8 Tib. omits it.

६0ख, Tib. 14a. 3

स्खालित्यं कतमत्। यदाश्रय[1]दौर्बल्यात्तत्कम्पता। पालित्यं कतमत्। यत्केशवैवर्ण्यं। वलीप्रचुरता कतमा। [5] यस्त्वक्सङ्कोचः। जीर्णता कतमा। या कामभोगाप्रतिबलता तेजोविहानिश्च। भग्नता[2] कतमा। या व्यवसायकरणाप्रतिबलता प्रकृत्यनारोग्यतामुपादाय। तिलकाचित[3]-गात्रता कतमा। [6]यत्कालपिण्डोत्सदत्वं अविरूप्यविप्रतिबन्धेन[4] तत्र कुब्जगोपानसीवङ्कता। घुरुघुरु[5]प्रश्वासकायता कतमा। या गमनेर्यापथप्रभाविता [7] कायसंस्थानता तदुद्भवा च गाढश्वसनकामनता (?)। [6]पुरतः प्राग्भारकायता कतमा। निषद्येर्यापथावस्थितस्य यावनतकायप्रतिबलता[7]। दण्डविष्कम्भनता कतमा। [Tib. 115a. 1] स्थानेर्यापथावस्थितस्य या दण्डबलाधानविहरणता। धनुत्वं (?) कतमत् स्वप्नेर्यापथावस्थितस्य या गाढाभीक्ष्णस्वप्नता। मन्दत्वं [2] कतमत्। या तत्रैव सुप्रतिबोद्धुमप्रतिबलता। हानिः कतमा। या स्मृतिबुद्ध्योः। परिहाणिः कतमा। या स्मृतिबुद्ध्योर्मान्द्यात्कुशलधर्मसमुदान[8]यना प्रतिबलता। [3]इन्द्रियाणां परिणामः कतमः। या प्रकृतिमन्दता। परिभेदः[9] कतमः। या [4] तेषामेव विषयाप्रचुरता[10]।

---

1 Tib. lit. *-kāya* (lus) for *-āśraya* Here it is quite clear that *khālitya* means here 'shaking' and is derived from the root √ *skhal* 'to move'.

2 Tib seems to read žam. for žum. MS *bhagnatā*

3 MS *tilakālakācitā-*, Tib lus. smra ba nag. pos. suggesting *kālatilakagātratā* In Tib. *kālatilakācita* may be sme. ba. nag pos. bsags. pa.

4 The words from *yat kāla°* to *bandhena* as they are found in the MS are not clear either in Skt. or in Tib.

5 Generally *ghuraghurā*, onomatopoetic sound from the throat in old ege ; "*kantho ghuraghurāyate*", Bhāgavata Purāna, III 30 16.

6 So the MS. For this word Tib. has sna. ma. pas. che ba. ñid.

7 In Tib *pratibalatā* is wanting.

8 Tib sgrub ; MS *samudānanā*.

9 It is a new word. What does it mean ? Tib. yons su. hbral. ba lit. meaning *parivıraha* or *parıvıyoga*.

10 So the MS. Tib. may support *apracuratā* reading mthu. med. par. gyur. pa. which may be taken to mean *apratibalatā*.

६१क, Tib. 114b. 4

संस्काराणां पुराणीभावः कतमः। या एषामेव पश्चिमा दशासन्नमरणतामुपादाय। जर्जरीभावः कतमः। या आयुःपरिसमाप्तेराश्रयस्य[1] भङ्गाभिमुखता कृत्यविनियोगासमर्थतामुपादाय। जरायाः[2] पुनः [५७क] समासार्थः कतमः। |[5] आश्रयविपरिणामः केशविपरिणामः[3] पुष्टिविपरिणामस्तेजो[4]वलविपरिणाम आरोग्यविपरिणामो वर्णविपरिणाम ईर्यापथविपरिणामोऽरूपीन्द्रिय-[6] विपरिणामो रूपीन्द्रियविपरिणामो दशातिवृत्ति[5]रायुःसंक्षेप[6]- समासार्थो द्रष्टव्यः ॥

ते ते सत्त्वाः कतमे। [7] नारकादयः। सत्त्वनिकाया कतमे। सर्वे त एव। च्युतिः कतमा। येषां सत्त्वानां मर्मच्छेदमन्तरेण[7] मरणं। च्यवनता कतमा। येषां सत्त्वानां सह मर्मच्छेदेन मरणं। भेदः[8] कतमः। [Tib. 115b. 1] या विज्ञानस्याश्रयादपक्रान्तिः। अन्तर्धानिः[9] कतमा। यो रूपिणामिन्द्रियाणां निरोधः। आयुषो हानिः कतमा। या हिक्काश्वासावस्था। ऊष्मणो हानिः [2] कतमा। या निश्चेष्टावस्था। स्कन्धानां निक्षेपो जीवितेन्द्रियस्य निरोधः[कतमः]।[10] यत्कालमरणं। मरणं कतमत्। या कालच्युतिस्तत्प्रत्ययैः। [3] कालक्रिया कतमा। यासन्ना चिरमृतावस्था। अपरः पर्यायो

---

1 Tib. lit. *dehasya* (lus), so below.

2 Tib. rga. bahi , MS *jarāyām*.

3 Omitted in Tib.

4 After *tejas-* Tib adds *hān i*(ñāms.).

5 Tib. gnas. skabs. hdas.

6 Tib mjug, it should be taken here in the sense of *anta* or *avasāna* 'end'. In MS there is *saṃkṣepāt* after mjug. Tib. reads one word more, but it is illegible.

7 Tib omits *-antarena* reading gnad chad de. hchi.baho. lit *tanmarmacchedamaranam*.

8 Tib. hbral. ba. meaning *viyoga*, *viccheda*, *apakrānti*.

9 So reads the MS, but usually we should read *antardhānam*, if it is not a new word. Tib has med, pahi. hgyur, but generally one should read nub. pa. or mi snan ba

10 Tib gan. že. na MS omits it. Just after it, i e , before *yat* which follows MS has *tam agni*. There is nothing of it in Tib.

६१क, Tib. 115a. 4

मारणं[1] मारकर्म[2] कालक्रियेत्युच्यते। मारणस्य पुनः समासार्थः कतमः। या च च्युतिः। यस्य च [4] धर्मस्य च्युतिः। यथा च च्युतिः च्युतस्य च तदूर्ध्वं यः कालः।[3] इत्ययं समासार्थः। इत्ययं प्रतीत्यसमुत्पा[4]दविभङ्गस्य विभङ्गो द्रष्टव्यः॥

[ क्रमः ]

[5] केन कारणेनाविद्यादीनां भवाङ्गानामेवंरूपः क्रमनिर्देशः कृतः। पूर्वं तावज्ज्ञेये वस्तुनि सम्मोहः। सम्मूढस्य तत्रैव मिथ्याभिसंस्कारः। मिथ्याभिसंस्कारा[6]च्चित्ते विपर्यासः। चित्तविपर्यासात्प्रतिसन्धिबन्धः[5]। प्रतिसन्धिबन्धादिन्द्रियपरिपूरिः। इन्द्रियपरिपूरेर्द्वाभ्यां विषयपरिभोगः। विषयपरिभोगादध्यव[7]सानं तत्प्रार्थना च। प्रार्थनया पर्येषमाणस्य क्लेशोपचयः। क्लेशोपचयात्पौनर्भविकमिष्टानिष्टकर्मसमुत्थानं। कर्मोपचयसमुत्थानात्पञ्चगतिके संसारे [Tib. 116a. 1]ऽभिनिर्वृत्तिदुःखं। अभिनिर्वृत्तिदुःखकृतं च जरामरणादिदुःखमात्मभावपरिणामनैमित्तिकं जरामरणदुःखं[6]। विषयपरिणामनैमित्तिकं [2] शोकपरिदेवदुःखदौर्मनस्यायासदुःखं। तस्मादनु[7]क्रमश एतानि द्वादशाङ्गानि निर्दिष्टानि भगवता॥

अपरोऽनुक्रमपर्यायो [3] द्विविधप्रत्ययं प्रतीत्यसमुत्पादमारभ्य आत्मभावप्रत्ययं विषयोपभोगप्रत्ययं च। आत्मभावप्रत्ययः षड्भिरङ्गैः संगृहीतः। विषयोपभोगप्रत्ययोऽपि षड्भिरेव। पूर्वं[4]मात्मभावे आत्मग्राहादिभिः संमूढः। ततः कर्मणां दुःखफलविपाकमजानानः कर्म करोति। कृत्वा च तदेव[8]मनुवितर्कयति। कर्मणा तद्विज्ञानसहायेन [5] त्रिविधमायत्यां दुःख-

---

1 Tib hchi. ba, MS māranam.

2 Before kālā Tib. adds mṛtyu or marana.

3 Tib. śi. hphos pa dehi. mjug thegs. kyi. dus. gan. yin. pa. ste

4 Tib rten. cin. hbrel bar. hbyun. bahi. rnam. par. hbyed. pahi. MS pādah (?).

5 Tib. omits pratibandhaḥ.

6 Tib. omits -duhkham.

7 Tib. adds evam sati (de. lta. bas na).

8 MS indistinct. Tib. ses. che.

मभिनिर्वर्तयन्ति इन्द्रियनिर्वृत्तिसंगृहीतं [1]तत्परिपूरिसंगृहीतं विषयपरिभोगसंगृहीतं च। स्पर्शावसानं नामरूपं [2]च दृष्ट एव च धर्मे [6]स्पर्शप्रत्ययायां वेदनायां तृष्णामुत्पाद्य विषयप्रत्ययां पर्येषणामापद्यते। व्यवसायमापद्यते। व्यवसायमुखेन लाभसंस्कारमुखेन शीलव्रतमुखेन मोक्षमुखेन कामपर्येषणामात्मभावपर्येषणां मोक्ष[ 7 ]पर्येषणां [ विषयपरिभोगप्रत्ययपर्येषणां मिथ्या[1]पर्येषणामापद्यमानः क्लेशांश्च तत्पूर्वकाणि कर्माणि कृत्वा पञ्चगतिके संसारे जायते [Tib. 116b. 1] जीर्यति म्रियते च॥

अपरोऽनुक्रमपर्यायः। त्रयः सत्त्वराशयः। लोकोत्तरा विशुद्धिकामा विषयपरमाश्च। तत्र[2] प्रथमाः प्रतीत्यसमुत्पादं [५८क] निरोधयन्ति शुक्लपक्षेण न वर्धयन्ति। द्वितीयाः सत्त्वाः सत्यानि यथाभूतमजानाना उपस्थितस्मृतयः पुण्य[3]मानेञ्ज्यं च सास्रवं भावनामयं कर्म कृत्वानुपस्थितया वा पुनः स्मृत्या पुण्यं विप्रतिसारपरिभावितेन वाविप्रतिसारप्रामोद्य[4]परिभावितेन वा चेतसा बहुलं विहरन्ति। ते[5] पूर्ववद्धीनमध्यविशिष्टा उपपत्त्यायतनेऽनुपूर्वेण त्रिप्रकारमायत्यां दुःखमभिनिर्वर्त[5]यन्ति। तृतीयानां सत्त्वानां प्रत्युत्पन्नविषयपरिभोगजे वेदिते वर्तमानानां पूर्ववदपराणि [6]षडङ्गानि क्रमशो द्रष्टव्यानि तृष्णाद्यानि जरामरणावसानानि॥

केन कारणेन [6] प्रतिलोमानुपूर्व्या जरामरणमिदं कृत्वा प्रतीत्यसमुत्पादो देश्यते सत्यनयदेशनामधिकृत्य। तथाहि। जातिजरामरणं दुःखसत्यप्रविभक्तं[7]। यदुक्तं भगवता [7] न च नामरूपनिरोधपूर्वङ्गमा धर्मा इति। केन कारणेन अविद्यानिरोधपूर्वङ्गमा नोक्ताः विमुक्तिचेतसां तत्प्रज्ञप्तेः। ·त्वात्[8]

---

1 MS reads *na* for *tat* (Tib. de.).

2 For *rūpam* MS *rūpādyam* not supported by Tib. which reads here miṅ daṅ. gzugs. daṅ.

3 Before *paryeṣaṇām* MS *layā* (?).

4 Tib. yul. la. yoṅs. su loṅs. spyod. pahi. rkyen daṅ ldan pahi. yoṅs. su. chol. ba.

5 Tib. *tena* (des. na ).

6 Tib. gžan, MS *aparimāṇi* (?).

7 Tib. rab. tu phye. ba. yin. , MS *prabhāvite*.

8 The Tib. text is illegible.

६१ख, Tib. 116. 5

तेषां हि दृष्टे धर्मे [Tib. 117a. 1] बीजभूतं वेदनावसानं निरुद्धं भवति। दृष्टे च धर्मे वेदनां वेदयमानस्य तृष्णानुशयसमुद्घाता[2]दप्रवृत्तेर्निरुद्धा भवति।[1] तन्निरोधात्तत्पूर्वङ्गमानि निरुद्धानि भवन्ति। इत्येवंभागीयः प्रतीत्य-समुत्पादस्य क्रमहेतुर्द्रष्टव्यः॥

[ निरुक्तिः ]

केन कारणेन प्रतीत्यसमुत्पादः प्रतीत्यसमुत्पाद [3] इत्युच्यते। प्रतिगत्य[2] गतिषु संयुक्तानां क्लेशैरुत्पादः प्रतीत्यसमुत्पाद इत्यक्षरनिर्वचनं। पुनः प्रत्ययत[3] उत्पादः प्रतीत्यसमुत्पादः। क्षणिकार्थमधिकृत्य[4][4]। पुनः प्रत्यया-दतीतादत्यक्तात्स्वसन्ततावुत्पादः प्रतीत्यसमुत्पादः। अस्मिन्सतीदं भवत्यस्यो-त्पादादिदमुत्पद्यते [नान्यथा][5] [5] इत्येतमर्थमधिकृत्यैतन्निर्वचनं द्रष्टव्यं। पुनः प्रतिगत्य प्रतिगत्य सन्तत्योत्पादः प्रतीत्यसमुत्पादः। विनश्य विनश्ये-त्यर्थः। पुनः प्रत्ययीभावं गत्वाऽतीतेऽध्वनि "सन्तत्योत्पादः प्रतीत्य[6] समुत्पादः। उक्तं भगवता[7] प्रत्ययगम्य समुत्पादं देशयिष्यामीति। प्रत्ययगम्ये-त्यभिसम्बुध्येत्यर्थः[8]। ततः[9] [7] सैव संज्ञा निरूढा प्रतीत्यसमुत्पाद इति॥

---

1 This is what is in the MS According to Tib there is *tṛṣṇāyā anuśayah* (sred pahi bag. la. ñal.) Thus one is to read *tṛṣṇāyā anuśayah samudghātād apravṛtter niruddho bhavati*

2 For *pratigatya* Tib ži. gnas, which lit. means *śamatha*

3 MS *itvartāyayasamgata* (?) not in Tib.

4 For *kṣaṇika* Tib. lit. myur. du. hjig. pa.

For a detailed discussion on *pratītya-samutpāda* see MV, pp. 5ff and notes thereon by Poussin.

5 Tib. gžan. du. ma. yin. no. For *ity etam artham* (Tib. žes. bahi. don. hdi.). MS *nānyatretyetamartham.*

6 MS adds here *samah.*

7 Tib. adds *api* (kyan)

8 MS *abhisambuddhotpādāthārtha* (?) Tib is quite clear reading so sor. thugs. su. chud ces. bya ba. ni. mnon. par. rdsogs par. rtogs. žes bya, bahi. tha tshig. go. It is to be noted here that while the sentence *pratya° tyarthah* is where it is given in the body in the Tib. text the MS reads it between the words *pratyavagamya.* and *samutpādam.*

9 Tib. lit. *evam* (de. lta. bas. na.).

[ प्रत्ययः ]

अविद्यासंस्काराणां कतिभिः प्रत्ययैः [प्रत्ययत्वं भवति ।]।[1] रूपिणामधिपतिप्रत्ययेन। अरूपिणां तु [Tib. 117b 1] त्रिभिः समनन्तरालम्बनाधिपतिप्रत्ययैः। एवमवशिष्टानामङ्गानां प्रत्ययत्वं यथायोगं द्रष्टव्यं। रूपिणि[2] रूपिणामेकेनाधिपतिप्रत्ययेन। [2] अरूपिणां द्वाभ्यामालम्बनप्रत्ययेन च[3]। अरूपिणि रूपिणामेकेन। अरूपिणि[4] त्वरूपिणां त्रिभिः समनन्तरालम्बनाधिपतिप्रत्ययैः॥

[3]केन कारणेन हेतुप्रत्ययेन न प्रत्ययान्येतान्यङ्गानि। स्वभावबीजप्रत्यय-[२८ख]प्रभावितत्वाद्धेतुप्रत्ययस्य। यदि हेतुप्रत्ययेन न प्रत्ययानि तत्केन कारणेन हेतुफलभावेन प्रतीत्यसमुत्पादो निर्दिश्यते। [4] अधिपतिप्रत्यय[स]गृहीत[5]मापाहकहेतु[6]मधिकृत्य आक्षेपहेतुमभिनिर्वृत्तिहेतुं च॥ कत्यङ्गान्याक्षेपहेतुसंगृहीतानि। अविद्यामुपादाय यावद्वेदना।[7] कत्यङ्गान्यभिनिर्वृत्तिहेतु [5]सङ्गृहीतानि। तृष्णामुपादाय यावद्भवः। कत्यङ्गान्याक्षेपाभिनिर्वृत्तिहेत्वोः फलसंगृहीतानि। दृष्टे च धर्मे सम्पराये च विज्ञानादीनि वेदनावसानानि [6] जातिजरामरणावसानि॥

[ प्रत्ययप्रभेदः ]

यदा योनिशोमनस्कारहेतुका विद्योक्ता केन कारणेन स प्रतीत्यसमुत्पादनिर्देश आदितो न निर्दिष्टः। अप्रहाणहेतुत्वात्[8] [7] संक्लेशहेतुत्वात्। तथाहि। नामूढस्य[9] स मनस्कार उत्पद्यते। संक्लेशहेतुश्च प्रतीत्यसमुत्पादः। अविद्या च

1 Tib. rkyen. du. hgyur.

2 MS *rūpinī* or *arūpini* in all the cases Tib. gzugs can. la. Skt. *rūpini*

3 Tib. *ālambanapratyayena adhipatipratyayena ca* (dmigs. paḥi. rkyen. dan. badag po. rkyen dag. gñis so).

4 Omitted in Tib.

5 Tib. bsdus. pa.

6 Tib. hdren. rgyu. for *ākṣepa hetu*, Tib. hphen. pahi. rgyu. For six and five kinds of *hetu* see AK ii 245, 314.

7 MS *vedanāyāh*. So below *bhāvāt* for *bhavah*

8 MS *-hetuvān na*.

9 Tib rmons. pa. ma. yin. pa. la.

२८ख, Tib. 117a. 7

स्वभावसंक्लिष्टा अयोनिशो [Tib. 118a 1] मनस्कारश्च स्वभावसंक्लिष्टः । मनो विद्यां [1]संक्लेशयति । अपि त्वविद्यावशेन संक्लिश्यते । कर्मक्लेश [2]-प्रभावितं च जन्म । तत्र कर्मणो हेतुरादिरविद्या प्रतीत्यसमुत्पादस्य । तस्मादस्य योनिशो मनस्कारो नोक्तः ॥

केन कारणेन स्वभावः स्वभावस्य प्रत्ययत्वेन [2]नोक्तः । नहि स्वभाव- [3] प्रत्ययान्तरमलभमानः स्वभावस्य संक्लेशतः पोषको वा भावको वा भवति । तस्मान्नोक्तः ।

केन कारणेन पुण्यानेञ्ज्याः संस्कारा प्रतिसंख्याय मनु (?) कृता[3] [4] अविद्याप्रत्यया इत्युच्यन्ते । साङ्केतिकदुःखहेतुमजानानस्य तत्प्रत्यया अपुण्याः[4] । पारमार्थिकं दुःखहेतुमजानानस्य तत्प्रत्ययाः पुण्या [5] नेञ्ज्याः । तस्मात्तेऽप्यविद्याप्रत्यया उच्यन्ते ॥ यदा लोभद्वेषमोहनिदानं कर्मोक्तं तत्केन कारणेन मोहनिदानमेवोच्यते । पुण्यापुण्या [6] नेञ्ज्यकर्मनिदानाधिकारतः ।[5] अपुण्यमेव तु कर्मलोभमोहनिदानं ॥ यदा चेतनासमुत्थापितत्वात्कायवाक्कर्मणः[6] संस्कारप्रत्यया अभिसंस्कारा[7] [7] केन कारणेनाविद्याप्रत्यया एवोच्यन्ते । सकलसंस्कारसमुत्थानप्रत्ययाधिकारात् क्लिष्टकुशलचेतनोत्पत्तिप्रत्ययत्वाधिकाराच्च ॥ यदा विज्ञानं नामरूपप्रत्ययमपि [Tib 118b. 1] केन कारणेनास्मिन्नर्थे संस्कारप्रत्ययमेवोच्यते । संस्कारा विज्ञानस्य

---

1 Tib. text, too, is not clear here

2 Tib lit. *kena kāranena svabhāvasya pratyayatvam noktam* (ciḥi. phyir. no. bo. ñid. kyi. rkyen ma. gsuns. śe na).

3 So the MS. Tib. bsgrims. te. byas. pa. ma. yin. na.

4 Tib adds *jāyante* (hbyun), so in the next sentence.

5 Tib. mi. gyo. bahi. las. ·kyi. gžihi. skabs. yin. pahi phyir. MS. *-nejyā karmā*

6 Here the plural number is expected.

7 As it is in the MS. Tib. sems pa. ni lus. dan. nag. gi. las kun. nas. slan bar. byed pas hdu. byed rnams. hbyun bar. hgyur. na. ciḥi phyir. Thus *saṃskārapratyayāḥ* is omitted and here is *saṃskārāḥ* and not *abhisaṃskārāḥ* as in the MS, *after* which Tib. would add *jāyante* (ḥbyuṇ. bar. ḥgyur.).

संक्लेशकाः पुनर्भवाक्षेपका अभिनिर्वर्तकाश्च। न तु नामरूपमाश्रयालम्बनत [2] उत्पत्तिप्रत्ययमात्रत्वात्॥ यदा नामरूपं महाभूतान्युपादाय स्पर्शमपि केन [६३क] कारणेन विज्ञानप्रत्ययमेवोच्यते। विज्ञानस्य तदभिनवोत्पत्तिहेतुत्वान्महाभूतानि [3] स्पर्शश्च केवलमुत्पन्नस्य प्रतिष्ठाहेतुर्भवत्युत्पत्तिकाले च यदा षड्[1] धातून्प्रतीत्य मातुः कुक्षौ गर्भस्यावक्रान्तिरुक्ता[2] केन कारणेन विज्ञानधातुरेवोक्तः। सति हि विज्ञानधातौ नियत[3] मातुः कुक्षौ शुक्रशोणितमहाभूतकुक्षि[4] च्छिद्रा[4]वैकल्यात्प्रधानो विज्ञानधातुरिति कृत्वा सर्वयोनिभवोत्पत्त्यधिकाराच्च॥ यदा षडायतनमाहारप्रत्ययमपि केन कारणेन नामरूपप्रत्ययमेवेहोक्तं। [5] तदुत्पत्तिकारणत्वान्नामरूपस्य। उत्पन्नस्य च स्थित्युपस्तम्भमात्रकारणमाहारः। यदा त्रिकसमवायप्रत्ययः स्पर्शः केन कारणेन षडायतनप्रत्यय एवोक्तः। सति षडायतने तदन्यद्वयावैकल्यात्षडायतनप्रधानं प्रधानमिति कृत्वा द्वयसंग्रहाच्च षडायतनस्य [6]॥

यदात्मोपक्रमिकाः परोपक्रमिका ऋतुविपरिणामिका पूर्वकर्माहृताश्च वेदना उपलभ्यन्ते [7] केन कारणेनेह स्पर्शप्रत्यया एव परिदीपिताः। समासन्नकारणत्वात्स्पर्शस्य। स्पर्शाहारकत्वाच्च तदन्येषां प्रत्ययानां ता अपि वेदनाः। स्पर्शसम्भवा नान्तरेण स्पर्शमिति कृत्वा। [Tib 119a. 1] यदा तृष्णाविद्याप्रत्ययाप्युक्ता तत्स्थानीयविषयप्रत्यया च केन कारणेनेह· वेदनाप्रत्ययैवोक्ता। यस्माद्वेदनावशाद्विषयसंयोगप्रार्थना प्रवर्तते[5] [2] तदुपमे[6] विषयें मोहवशात्तु केवलं तासां वेदनानां समुदयास्तङ्गादीन्यथाभूतमप्रजानन्त(?)स्ततश्चित्तं न निवारयन्ति[7] (?)॥

यदानुशयादप्रहीणा[3]न्तस्थानीयेभ्य[8]श्च धर्मस्य उपादानस्य प्रभवो भवति केन कारणेनेह तृष्णाप्रत्ययमेवोपादानमुच्यते। यस्मात्प्रार्थनाजातः पर्येष्टि-

---

1 Tib. drug. MS *ve(ce?)d.*

2 Tib. omits *uktā* The case is the same also with the next sentence.

3 Not in Tib.

4 Tib is here very indistinct

5 Tib. mi. ḥbrel. bar. hdod. pa. hbyun ba. dan.

6 Tib. de. dan. mthun. pahi. lit *tatsamāne.*

7 In both the places MS has the Singular number.

8 Tib. ma. seb. nas.

६२ख, Tib. 118b. 1

मापद्यमानोऽनुशयं च प्रबोधयति तत्स्थानीयांश्च धर्मानाकर्षयति। [4] यदा-पूर्वमेवाविद्याप्रत्ययः कर्मभव उक्तः, केन कारणेन उपादानप्रत्ययो भव उच्यते। उपादानबलेन यस्मात्तदेव कर्म तस्मिंस्तस्मिन्नुपपत्त्यायतने विज्ञाननामरूपाद्याकर्षण[5]समर्थं भवति। यदा शुक्रशोणितादिप्रत्ययापि जातिः केन कारणेन भवप्रत्ययैवोक्ता। भवे[1] सति नियतं तदन्यप्रत्ययावैकल्य[2]सद्भावात् स एव प्रधानः प्रत्यय [6] इति कृत्वा। यदा अध्वविषमापरिहारपराक्रमणा[3]दिभिरपि प्रत्ययैर्जरामरणमुपलभ्यते। केन कारणेनेह जातिप्रत्ययमेवोच्यते। जातिमूलत्वात्तेषामपि प्रत्ययानां तत्प्रत्ययवैकल्येऽपि च जातिजरामरणस्य [7] जातिकृतत्वात् ॥

एषां[4]द्वादशानामङ्गानां कत्यङ्गानि क्लेशवर्त्म। कति कर्मवर्त्म। कति दुःखवर्त्म। त्रीणि क्लेशवर्त्म। द्वे कर्मवर्त्म [Tib. 119b. 1] अवशिष्टानि दुःखवर्त्म ॥

[६३ख] कति हेतुभूतान्येव। आद्यमेकं। कति फलभूतान्येव। पश्चिममेकं। कति हेतुफलभूतानि। अवशिष्टानि ॥

पुनरस्य च प्रश्नस्यान्यो विसर्जनपर्यायः। [2] त्रीणि हेतुफलभूतान्येव। द्वे फलभूते एव। अवशिष्टानि हेतुफलभूतानि द्रष्टव्यानि ॥

कति प्रत्येकलक्षणानि। कति संसृष्टलक्षणानि। त्रीणि प्रत्येकलक्षणानि। संस्कारादीन्यङ्गानि [3] संसृष्टलक्षणानि ॥

केन कारणेन संस्कारा भवश्च संसृष्टलक्षणं। द्विधानिर्दिष्टं।[5] इष्टानिष्टफलदानतो गतिनिर्वर्तनसामर्थ्यभेदाच्च ॥

[4] केन कारणेन विज्ञाननामरूपषडायतनैकदेशसंसृष्टलक्षणं त्रिधा निर्दिष्टं।

---

1 MS *bhava*; Tib. srid. pa. yod na

2 Tib. lit -*sākalya*, (tshan. bar.)

3 For *ākramana*, MS *upakrama*. Tib. has gnod. pa *bādhā*. *apahāra*, etc. it is however better to read gnon. pa. *akramaṇa* Elsewhere for *upakrama* Tib. has, however, gnod. pa

4 Tib. hdi. dag, MS *yeṣām*.

5 Acc. to Tib. °*lakṣaṇam dvidhā*, (*Gñis* matsan).

६३क, Tib. 119a. 3

संक्लेशकालाधिकारात्। निषेक[1]कालाधिकारात्। [5] प्रवृत्तिकालाधिकारतश्च ॥

केन कारणेन विज्ञानादीनि वेदनावसानानि जातिजरामरणानि च द्विधाख्यातानि। [ 6 ]पृथग्दुःखवस्तुलक्षणविख्यापनार्थमाक्षेपाभिनिर्वृत्तिप्रभेदप्रदीपनार्थं च॥

प्रतीत्यसमुत्पादे कतमः प्रतिगमार्थः। यदुत्पन्नानामनवस्थानार्थः। प्रतिविगमार्थः। [7] कतमः सङ्गमार्थः। यः सामग्रीसमवधानार्थः। प्रत्ययानां कतम उत्पादार्थः। यः प्रत्ययसामग्रीपरिगृहीतानां नवनवप्रभवार्थः। कतमः प्रतीत्यसमुत्पादः। कतमा प्रतीत्यसमुत्पन्नताया उत्पत्तिधर्मता। [Tib. 120a. 1] संस्काराणामयं प्रतीत्यसमुत्पादः। या पुनरुत्पन्नतैव सा प्रतीत्यसमुत्पन्नतेत्युच्यते। कत्यङ्गानि दुःखप्रत्ययसंगृहीतानि [2] दृष्टधार्मिकदुःखाय च। द्वे जातिर्जरामरणं च। कति दुःखसत्यसंगृहीतान्येवायत्यामेव च दुःखाय। विज्ञानादीनि वेदनावसानानि बीजभूतानि। कति समु[3]दयसत्यसंगृहीतानि। अवशिष्टानि ॥

अविद्या संस्काराणां किं[2] सहभावेन प्रत्ययः अथा[3]नन्तरनिरुद्धः प्रत्ययः। अथ चिरनिरुद्धः प्रत्ययः। त्रिधा [4] प्रत्ययो द्रष्टव्यः। सहभावेन संस्कारस्थानीयेषु धर्मेष्वावरणप्रत्ययः। यदर्थं संस्कारानुत्थापयति तदज्ञानतः। संजनन[4]प्रत्ययोऽनन्तरनिरुद्धः [5] कुदृष्टिप्रमादसहगतेनाज्ञानेन। आयत्यां तदुत्पत्त्यनुकूलं सन्तत्यवस्थापनाच्चिरनिरुद्धोऽप्याक्षेप[5]प्रत्ययो द्रष्टव्यः।

संस्कारा विज्ञानस्य कथं त्रिप्रकारप्रत्ययतया [6] द्रष्टव्याः। बीजभाव-

---

1 MS gives this reading, but the meaning is not clear. Tib. Xylograph is also not clear appearing to read sdug pahi. which may mean here *iṣṭa*, *kānta* 'attractive', 'agreeable' or *śubha* 'good'.

2 So the MS.

3 Tib. hon. te ; MS *tathā*

4 Tib omits *saṃjanana*.

5 Tib. hphen pahi , MS pyāceva (?)

६३ख, Tib. 119b. 4

परिभावनया सहभावप्रत्ययः। तदूर्ध्वं तद्वशवर्तनतया संजननप्रत्ययोऽनन्तरनिरुद्धः आयत्यां फलाभि[1]निर्वर्तित[7]ाक्षेपतया[2] आक्षेप[1]प्रत्ययः ॥

यथा संस्कारा विज्ञानस्य [प्रत्ययः][1]।एवं विज्ञानं नामरूपस्य। नामरूपं षडायतनस्य। षडायतनं स्पर्शस्य[5] [Tib 120b 1] स्पर्शो वेदनानाम्। वेदना तृष्णायाः।

कथं त्रिप्रकारप्रत्ययतया द्रष्टव्याः। सहभावतोऽध्यवसानप्रत्ययतया द्रष्टव्याः। तदनन्तरं तद्वशेन पर्येष्ट्यादि [2] [६४क] क्रियानुप्रवर्तनतया संजननप्रत्ययः। आयत्यां तद्दुर्विमोच्य[6] सन्तत्यवस्थानाच्चिरनिरुद्धोऽप्यावेद्य[7] प्रत्ययः ॥

तृष्णोपादानस्य कथं त्रिप्रकारप्रत्ययतया प्रत्ययः। [3] छन्दरागसहगतत्वात्तदुपादानीयेषु धर्मेषु रुचिनिवेशनप्रत्ययत्वात्सहभावप्रत्ययः। तदनन्तरं तद्वशवर्तनात्संजननप्रत्ययः। तद्दुर्विमोच्य[4]सन्तत्यवस्थापनाच्चिररुद्धोऽप्याबाध(?)प्रत्ययः ॥

उपादानं भवस्य कथं त्रिप्रकारप्रत्ययतया प्रत्ययः। सहभावतस्तस्य कर्मणस्तद्गत्यावर्जनतया सह[5]भावप्रत्ययः। तद्बलेन तस्मिन्नुपपत्त्यायतने तद्विज्ञानाद्याकर्षणप्रत्ययतया अनन्तरनिरुद्धः संजननप्रत्ययः। धातुनिर्वर्तनसामर्थ्यप्रत्ययतया [6] आवेधप्रत्ययश्चिरनिरुद्धोऽपि ॥

भवो जातेः कथं त्रिप्रकारप्रत्ययतया प्रत्ययः। सहभावप्रत्ययो बीजभावपरिभावनतया। अनन्तरं तद्वशानुवर्तनतया [7] संजननप्रत्ययश्चिरनिरुद्धोऽपि

---

1 Tib. hbras. bu. mnon.

2 MS *āvedhyatayā*(?) for *ākṣepatayā*, read in Tib. hphen. pas for hphel bas.

3 Tib hphen. pahi , MS *āvedya* (?)

4 Tib. rkyen. du. hgyur ba

5 Tib. reg. pahi , MS *saṃsparśasya*. So in the next sentence MS *saṃsparśo* for *sparśa* in Tib (reg).

6 Tib. de. las. gral, bar. dkah. bahi ; MS *oya durvimo* (?)

7 Tib. hphen pahi. rkyen ; MS *ābādha* (?). See the next paragraph where these words occur again for *avasthāpanāt* Tib (?)

६३ख, Tib. 120a. 6

तत्फलनिर्वृत्त्यावेधप्रत्ययः। यथा भवो जातेरेवं जातिर्जरामरणस्य प्रत्ययत्वेन द्रष्टव्या। भवस्य द्विधा [Tib. 121a. 1] व्यवस्थानं। प्रधानाङ्गतस्तथोपादानपरिगृहीतस्य कर्मणो यथापूर्वनिर्दिष्टं सकलाङ्गतः कर्मणो विज्ञानादीनां च वेदनावसानानां बीजभूताना[2]मुपादानपरिगृहीतानां भवतो व्यवस्थानं द्रष्टव्यं।

किमेषां भवाङ्गानामेतदेव कर्म यदुत संस्कारादीनां जरामरणावसानानामनुपूर्वप्रत्ययत्वमथान्यदपि किञ्चित्। [3] एतच्च स्वे स्वे गोचरे[1] च सर्वेषां यथायोगं वृत्तिर्द्वितीयं कर्म द्रष्टव्यं। किमविद्या केवलानां संस्काराणां प्रत्ययो यथान्येषामप्यङ्गानां। अविद्या यावज्जरामरणस्यापि प्रत्ययः [4] समासन्नप्रत्ययार्थेन पुनः संस्काराणामेव निर्दिष्टा॥

एवमवशिष्टाङ्गानि यथायोगं द्रष्टव्यानि॥

न तु पुनरधराणामङ्गानामुपरिमेषु[2] प्रत्ययत्वं। [5] केन कारणेन। यथोपरिम[3]प्रहाणायोपरिमप्रहाणे यत्नः क्रियते तत्प्रहाणेऽधरिमप्रहाणमिति कृत्वा नैवमुपरिमप्रहाणायाधरिमप्रहाणे। तस्मात्तावन्त्येव [6] तत्प्रत्ययानि [4]द्रष्टव्यानि।

कथमस्मिन्सतीदं भवतीत्युच्यते। अप्रहीणात्प्रत्ययात् तदन्योत्पादार्थेन। कथमस्योत्पादादिदमुत्पद्यत इत्युच्यते। अनित्यात्प्रत्ययात्तदन्यो[7]त्पादार्थेन। केन कारणेन जात्यां सत्यां जरामरणं भवति। जातिप्रत्ययं च जरामरणमित्युच्यते। यावदविद्यासंस्काराश्च अनेनैव व्यपदेशेन[5] [6]निरीहात्प्रत्ययात्तदन्यो-[Tib. 121b 1]त्पादार्थेन॥

---

1 Tib does not repeat *sve*, nor has it *ca* after *gocare*.

2 Tib. repeats the word *uparima* reading gon. ma goṅ ma

3 For *uparima* Tib *adhara* or *adharima* (hog ma.).

4 Tib. does not decide the gender.

5 Strictly Tib after *vyapadeśa* (brjod pahi) adds *krama* (tshul). So for *vyāpadeśena* one may read *vyāpadeśa-kramena* See the next passage. Again Tib. adds here *yojayitavyah* (hdi dan. sbyar. bar bya. ste), so in the next passage.

6 Before *nirīhāt* (Tib. byed. pa. med. pahi) MS adds *yena* in Tib. See the next passage.

६४क. Tib. 20b 7

केन कारणेन जात्यां सत्यां जरामरणं नान्यत्र जातिप्रत्ययं जरामरणमुच्यते । एवं यावदविद्या संस्काराश्च । अनेनैव व्यपदेशेन स्वसान्तानिकात्प्रत्ययात् स्वसन्तान [2] एव तदन्योत्पादार्थेन[1] ॥

ये धर्मा अविद्याप्रत्ययेन [६४ख] संस्कारा अपि ते[2] । ये वा संस्कारा अविद्याप्रत्यया अपि ते स्युः । संस्कारा [3] नाविद्याप्रत्यया अनास्रवा अनिवृताव्याकृताश्च कायवाङ्मनःसंस्काराः स्युरविद्याप्रत्यया न संस्काराः[3] । [4] संस्कारसंगृहीतं भवाङ्गं स्थापयित्वा यानि तदन्यानि भवाङ्गानि । अविद्याप्रत्ययाश्च [भवन्ति][4] पुण्याऽपुण्यानेञ्याः काय[5]वाङ्मनःसंस्काराः एतानाकारान् स्थापयित्वा च चतुर्थी कोटिः । इतीयं चतुष्कोटिका । यत्संस्कारप्रत्ययं विज्ञान [6]मपि तत् । यद्वा विज्ञानं संस्कारप्रत्ययमपि तत्स्यात् । संस्कारप्रत्ययं न विज्ञानं । विज्ञानं स्थापयित्वा तदन्यानि भवाङ्गानि । विज्ञानं न संस्कारप्रत्ययं यदनास्रवमनिवृताव्याकृतं च । विपाकजं स्थापयित्वा । वि|Tib 122a. 1]ज्ञानं च संस्कारप्रत्ययं च यत्पौनर्भविकं वीजभूतं फलभूतं वा । एतानाकारान् स्थापयित्वा चतुर्थी कोटिः ॥

अनेनानुसारेण[2]यथायोगं यावत्स्पर्शप्रत्ययाद्वेदिताश्चतुष्कोटिका[5] द्रष्टव्या ॥ या वेदनाप्रत्यया सर्वा सा तृष्णा । या तृष्णा सर्वा [सा][6] वेदनाप्रत्यया । [3] अत्रापि चातुष्कोटिकः स्यात् । तृष्णा न वेदनाप्रत्यया । उत्तरे विमोक्षे या प्रार्थना[7] यां च तृष्णां कुशलं निश्रित्य तृष्णां प्रजहाति । वेदनाप्रत्यया वेदना-

---

1 Tib de. las gžan. pahi skye. bahi phyir, MS °*utpādanārthena.*

2 The text here either in Skt or Tib. is not clear

3 Tib. hdu. byed. rnams. kyan yin. pa. yan, yod. de. MS *śanskārapuṇyā*°

4 note ?

5 Tib. adds here *yathāyogam* (ci rigs. su ).

6 Tib. de dag.

7 Tib hdod. pa. meaning generally *kāma* 'desire'.

६४क, Tib. 121a. 7

प्रत्यया न तृष्णा । [4]विद्यासंस्पर्शजां वेदनां प्रतीत्य ये तदन्ये धर्मा उत्पद्यन्ते । यानि च तदन्यानि भवाङ्गानि । वेदनाप्रत्यया च तृष्णा च [5] क्लिष्टा तृष्णा अविद्यासंस्पर्शजवेदितप्रत्यया ॥ एतानाकारान्स्थापयित्वा चतुर्थी कोटिः ॥

यत्तृष्णाप्रत्ययं तत्सर्वं तदुपादानं । यद्वा उपादानं [6]सर्वतृष्णाप्रत्ययं । अत्र पश्चात्पदकं[1] द्रष्टव्यं यत्तावदुपादानं सर्वं तत्तृष्णाप्रत्ययं स्यात्तु तृष्णाप्रत्ययं नोपादानं । [7] उपादानं स्थापयित्वा तदन्यानि भवाङ्गानि । ये च कुशलां तृष्णां प्रतीत्य आरब्ध[2]वीर्योदयः कुशला धर्मा उत्पद्यन्ते ॥

य उपादानप्रत्ययः [Tib. 122b.1] सर्वः स भवः । यो वा भवः सर्वः स उपादानप्रत्ययः । यस्तावद्भवः सर्वोऽसावुपादानप्रत्ययः । स्यात्तूपादानप्रत्ययो न भवः । [2] भवं स्थापयित्वा तदन्यानि भवाङ्गानि ॥

या या भवप्रत्यया सर्वा सा जातिः । या वा जातिः सर्वा सा भवप्रत्यया । या तावज्जातिः [3] सर्वा सा भवप्रत्यया । स्यात्तु भवप्रत्यया न जातिः । जातिं स्थापयित्वा यज्जरामरणं पश्चिमं भवाङ्गं ।

यज्जातिप्रत्ययं सर्वं तज्जरामरणं । यद्वा [4] जरामरणं सर्वं तज्जातिप्रत्ययं । यत्तावज्जातिमरणं सर्वं तज्जराप्रत्ययं । स्यात्तु जातिप्रत्ययं न जरामरणं । व्याधिरप्रियसंयोगः [5] प्रियविनाभाव इच्छाविघातस्तत्समुत्थिताश्च शोकपरिदेवदुःखदौर्मनस्योपायासाः ॥

एषां भवाङ्गानां कति सम्यग्दृष्टि[6]संगृहीतस्य मार्गस्याङ्गानि प्राधान्येन विबन्धभूतानि । अविद्या तत्समुत्थिताश्च मनःसंस्कारा भवैकदेशश्च विबन्धभूतः ॥

यथा सम्यग्दृष्टेरेवं[3] सम्यक्संकल्पस्य [६५क]सम्यग्व्यायामस्य सम्यग्व्यायामस्य सम्यग्वाक्कर्मान्ताजीवानां काय[वाक्][4]संस्कारा भवैकदेशश्च विबन्धभूतः ।

---

1 Tib tshig, phyi. ma. yin. par. ; MS pādakam.
2 MS not clear, so is Tib
3 Tib. yan. dag pahi lta. ba. la. ; MS drstir.
4 Tib. nag. gi. hdu. byed. rnams. dan

६४ख, Tib. 122a. 3

[Tib 123a 1] सम्यक्स्मृतेः सम्यक्समाधेश्चावशिष्टानि विबन्धभूतानि द्रष्टव्यानि ॥

एषां भवाङ्गानां कत्यङ्गान्येकान्तेन संक्लेश[2]पक्ष्याणि कति संक्लेशव्यवदानपक्ष्याणि। चत्वार्येकान्तेन संक्लेशपक्ष्याणि। तदन्यानि संक्लेशव्यवदानपक्ष्याणि। [3] जातिर्यापायेष्वक्षणेषु वा तदन्येषु[1] वा सा संक्लेशपक्ष्या। या पुनर्देवमनुष्येष्वक्षणविवर्जितेषु जातिः सा संक्लेशव्य[4]वदानपक्ष्या द्रष्टव्या। शेषाणि त्वङ्गानि यथायोगं तदुभयपक्ष्याणि द्रष्टव्यानि ॥

कतमस्यामविद्यायामसत्यां संस्कारा न भवन्ति। कतमस्या अविद्याया निरोधात्संस्कारनिरोध.। [5] त्रिप्रकारपर्यवस्थानसमुत्थानानुशयस्थायिन्या [अविद्याया निरोध][2] इति। अविद्यानिरोधादविद्यानिरोधे[3] तन्निरोधाच्च तन्निरोधे सति ततः संस्कारनिरोधः ॥

[6] कतमेषु संस्कारेष्वसत्सु विज्ञानं न भवति। कतम[4]संस्कारनिरोधाद्विज्ञाननिरोधः। ये संस्काराः स्वसन्ताने कृतनिरोधा[5] अनुत्पादितप्रतिपक्षाश्च। अपिच मनःसंस्कारेषु सत्सु [7] कायवाक्संस्काराः। ततस्तस्मिन्सति तद्भावे तत्प्रत्ययं विज्ञानं। तस्मिन्नसति तदभावे तत्साकल्यनिरोधाद्विज्ञाननिरोधो द्रष्टव्यः ॥

कतमस्मिन् विज्ञाने [Tib 123b 1]ऽसति नामरूपं न भवति। कतमविज्ञाननिरोधाच्च पुनः नामरूपनिरोधः। बीजभूते विज्ञानेऽसति फलभूतं विज्ञानं न भवति। [2] तदुभयनिरोधात्पुनस्तदुभयनामरूपनिरोधः ॥

---

1 tad° vā omitted in Tib, but it appears to read simply *tadanyesu* (de ma. yin pahi.).

2 Tib. ma. rig pa. hgags

3 Tib ma rig. pa hgag la, MS *nirodhah.*

4 MS *katamah*

5 Tib ran. gi rgyud. la byas. nas. hgags. la. MS *kṛtaniro dhitā* (?)

यथा विज्ञाननामरूपयोर्नयस्तथा यथायोगमवशिष्टानामङ्गानां द्रष्टव्यो यावद् वेदनावसानात्। यथाऽविद्याप्रत्ययानां[1] [3] संस्काराणामेवं तृष्णा प्रत्ययस्योपादानस्य उपादानप्रत्ययस्य च भवस्य द्रष्टव्यः॥

यथा संस्कारप्रत्ययस्य विज्ञानस्यैवं भवप्रत्ययाया जाते [4] र्द्रष्टव्यः। यथा विज्ञानप्रत्ययानां नामरूपादीनां तथा जातिप्रत्ययस्य जरामरणस्य॥

कतमस्यां वेदनायामसत्यां तृष्णा न भवति। कतमवेदनानिरोधाच्च पुनस्तृष्णानिरोधः। [5] यथा संस्कारप्रत्ययस्य विज्ञानस्य तथास्यापि नयो द्रष्टव्यः॥

योऽसावष्टमुखः प्रतीत्यसमुत्पाद उक्त[6]स्तेषां कति मुखानि द्वादशाङ्गप्रतीत्यसमुत्पादप्रभावितानि। कति न। त्रीणि मुखानि तत्प्रभावितानि। द्वे एकदेशप्रभाविते। एकं सकलाङ्ग[7]प्रभावितं। अवशिष्टानि न [प्रभावितानि][2]। विज्ञानोत्पत्तिमुखं कर्मस्वकतामुखं चैकदेशप्रभाविते। सत्त्वलोकप्रवृत्तिमुखं पुनः सकलाङ्गप्रभावितं॥ [Tib 124a 1] प्रतीत्यसमुत्पादमजानानस्य कत्यादीनवा द्रष्टव्याः। पञ्च। आत्मदृष्टिर्भवति। पूर्वान्तसहगतानि [2] दृष्टिगतान्युत्पादयति। यथा पूर्वान्तसहगतान्येवमपरान्तसहगतानि पूर्वान्तापरान्तसहगतानि स्थामशः[3] परामर्शस्थायी [६५क] सोपादानः सपरितापनः। न [3] दृष्टे धर्मे परिनिर्वात्ययं पञ्चम आदीनवः॥[3] जानानस्य कत्यनुशंसा द्रष्टव्याः। एतद्विपर्ययेण पञ्चैवानुशंसा द्रष्टव्याः। एषां द्वादशानामङ्गानां कत्यङ्गानि [4]द्रव्यमस्ति[4]। आह नव[5]। कति न द्रव्यमस्ति। यान्यवशिष्टानि। कत्येकद्रव्य-

---

1 In Xylograph read gyi for gyis after rkyen in all similar cases

2 Tib rab tu phyi, (?) bi ma yin te

3 The text from *sthāmaśah* to *ādīnavah* both in Skt and Tib. is obscure. The latter reads nan gyis mchog tu hdzin par. gnas. pa. dan len. pa dan bcas pa dan yons su gdun. bi. dan bcas pa dan tshe. hdi. la yons su mya. nan. las MS *sthāyi* for *sthāyī* *sapant(?)sano* for *saparitāpanah.*

4 Tib. supports it (rdzas su. yod.) So in the following line

5 In Xylograph read dguho for dgeho

६४ख, Tib. 123b 2

स्वभावानि। पञ्च।[1] [कति नानाद्रव्यस्वभावानि। अवशिष्टानि।[2] ]कति ज्ञेयावरणानि। एकं। [5] कति दुःखनिर्वर्तकानि। पञ्च। कति दुःखगर्भाणि। पञ्चैव। कति दुःखान्येव। द्वे। कति हेतुभावनिर्देश्यानि। कति फलभावनिर्देश्यानि। कति हेतुफलव्यामिश्र[3]भावनिर्देश्यानि। [6]षट् प्रथमानि[4] अविद्यामुपादाय यावत्स्पर्शात्। तृष्णोपादानभवाश्च हेतुभावनिर्देश्याः[5]। पश्चिमे द्वे फलभावनिर्देश्ये। वेदनाव्यामिश्रनिर्देश्या साम्परायिकी[6] च स्पर्शप्रत्यया हेतुभूता दृष्टधार्मिकी च। तृष्णायाः प्रत्यया[त्][7] फलभूता। ते चोभे स्पर्शप्रत्यये कृत्वा व्यामिश्रे निर्दिश्येते॥

कत्यङ्गानि इष्टानिष्टफलनिर्वर्तकानि। कत्यङ्गान्यात्मभावफलनिर्वर्तकानि। [Tib. 124b. 1] पूर्वकाणि षट्पूर्व[8]फलनिर्वर्तकानि। पश्चिमकानि त्रीणि पश्चिमफलनिर्वर्तकानि एकं तदुभयफलनिर्वर्तकं॥

कति सुखवेदनासहगतानि। द्वे अङ्गे [2] स्थापयित्वा तदन्यानि। कति दुःखवेदनासहगतानि। तान्येव। स्थापितं चैकमङ्गं। कत्यदुःखसुखवेदनासहगतानि। [3]सुखवदत्रापि नयो द्रष्टव्यः॥ कत्यवेदनासहगतानि। एकमङ्गं यत्स्थापितं॥

कत्यङ्गानि विपरिणामदुःखतया संगृहीतानि। सुखवेदनासहगतानि [4] यच्चावेदनासहगतमङ्ग तस्य च प्रदेशः॥ कति दुःखदुःखतया संगृहीतानि। यानि दुःखसहगतानि यच्चावेदनासहगतमङ्गं तस्य च प्रदेशः[9]॥ [5] कति

---

1 Tib. *lnaho* ; MS yāny *avaśiṣṭāni.*

2 Tib, rdzas du. mahi ño bo. ñid du že. na

3 Tib omits *vyāmiśra*

4 Tib. madhyamāni (gon. mo ). According to Skt the Tib. reading should have been dan po.

5 MS °*nirdeśyāni*

6 According to Skt. text, was expected to be tshe. phyis ma. but MS reads here quite the opposite *sāmparāyikī* for which Tib. is tshe. phyi ma. pa.

7 Tib sred pahi. rkyen. gyis.

8 Tib adds *tara* or *tama* (sos) after *pūrva.* So in the next sentence before *phala*

9 Both the Skt. and Tib. texts are not here clear to me.

६५क, Tib. 124a. 4

संस्कारदुःखतया संगृहीतानि। यानि तावद्विपरिणामदुःखदुःखतया संगृहीतानि संस्कारदुःखतयापि तानि। स्यात्तु संस्कारदुःखतया संगृहीतानि [6] न तदन्याभ्यां दुःखताभ्यां[1]। यान्यदुःखासुखसहगतानि यच्चावेदनासहगतमङ्गं तस्य च प्रदेशः॥ [7] किं सर्वोपपत्तिसमापत्तिषु सर्वाण्यङ्गान्युपलभ्यन्ते समुदाचारतः। आह नोपलभ्यन्ते। असंज्ञिकं निरोधसमापत्त्यसंज्ञिसमापत्त्योश्च [Tib. 125a 1] रूपीण्युपलभ्यन्ते नारूपीणि[1] आरूप्येषूपपन्नस्य पुनररूपीण्युपलभ्यन्ते न रूपीणि॥

[2] स्यादङ्गानि निश्रित्याङ्गविवेकं प्रतिलभेत। आह। स्यादेकदेशतत्कालविवेकं न सकलाङ्गप्रत्यङ्गविवेकः। ऊर्ध्वभूमिकान्यङ्गानि निश्रित्य[3]ाधोभूमिकानां॥

कति क्लिष्टान्यङ्गानि कत्यक्लिष्टानि। त्रीणि क्लिष्टानि अवशिष्टानि द्विविधानि। अक्लिष्टानां तु कुशलानिवृता[4]व्याकृत[2]भेदेन द्विधाभेदो द्रष्टव्यः॥

कति कामप्रतिसंयुक्तानि। सर्वाणि समग्राणि समुदितानि। कति रूपप्रतिसंयुक्तानि। सर्वेषामेकदेशः। कथं तत्र जरा द्रष्टव्या। [5] यः संस्काराणां शैक्षाणि-नाशैक्षाणि। संवाणि। पुराणीभावो ज[ ६६क ]र्जरीभावः॥ यथा रूपप्रतिसंयुक्तान्येवमारूप्यप्रतिसंयुक्तानि। कति शैक्षाणि। न कानिचित्॥ कत्यशैक्षाणि। न कानिचित्[2]॥ कति [6] नैव शैक्षाणि-नाशैक्षाणि। सर्वाणि॥

यान्यङ्गानि कुशलसास्रवाणि तानि किं न शैक्षाणि। प्रवृत्तिपतितत्वात्[3] न युज्यते। शैक्षस्य तु कुशलसास्रवा धर्माः प्रवृत्ति[7]वैरोधिका विद्याप्रत्ययाश्च। कति स्रोतआपन्नस्य प्रहीणानि वक्तव्यानि। सर्वेषामेकदेशो नतु साकल्येन किञ्चित्॥

यथा स्रोतआपन्नस्यैवं सकृदागामिनः॥ [Tib. 125b 1] कत्यङ्गान्यना-

---

1 MS *duhkhatābhyām*.

2 So reads Tib. dge ba inams dañ. lun du. ma bstan. pahi. But MS has added *anivṛta* before *avyākrta* though it is not in Tib. which would read bsgril-b. pahi.

3 Tib. adds *na yujyate* (mi run ste.)

६५ख, Tib. 124b. 5]

गामिनः प्रहीणानि वक्तव्यानि। सर्वाणि कामावचराणि[1]। रूपारूप्याव-चराणां त्वनियमः ॥

कत्यङ्गान्यर्हतः प्रहीणानि वक्तव्यानि। सर्वाणि त्रैधातुकावचराणि[2] ॥

[सूत्रान्तसंग्रहः]

[2]कतिभिर्निर्देशैः प्रतीत्यसमुत्पादो निर्दिश्यते तेषु तेषु सूत्रान्तेषु। समासत. षड्भिः। अनुलोमनिर्देशेन प्रतिलोमनिर्देशेन एकदेशाङ्गनिर्देशेन[3] सकलाङ्गनिर्देशेन कृष्णपक्षनिर्देशेन शुक्लपक्षनिर्देशेन ॥

गम्भीरः प्रतीत्यसमुत्पाद उक्तो भगवता। कथं गम्भीरो वेदितव्यः। दशभिराकारैः प्रतीत्यसमुत्पादस्य गम्भीरार्थो द्रष्टव्यः[3]। यदुता- [4] नित्यार्थं दुःखार्थं शून्यार्थं नैरात्म्यार्थं चारभ्य। तत्रानित्यार्थमारभ्य स्वबीजाच्च [5] जायन्ते। परप्रत्ययं चापेक्ष्य परप्रत्ययतश्च जायन्ते। स्वबीजं चापेक्ष्य स्वबीजात्परप्रत्ययतश्च जायन्ते। न च बीजप्रत्यययोस्तज्जननं प्रति काचिदीहा वा चेष्टा वा [6] व्यापारो वा विद्यते। नच बीजप्रत्यययोरीहा वा चेष्टा वा व्यापारो वा विद्यते। नच पुनस्तयोर्हेतुत्वसामर्थ्यं न विद्यते। अनादि[4]प्रतिषिद्धलक्षणानि चाङ्गानि प्रतिक्षणं [7] च नव[5]-नव-लक्षणानि प्रवर्तन्ते। क्षणभङ्गुरश्च प्रतीत्यसमुत्पादः। अवस्थितप्रकारतया[6] च ख्याति।

तत्र दुःखार्थमारभ्य दुःखैकरसलक्षणानि चाङ्गानि [Tib. 126a. 1] त्रिप्रकारतया च ख्यान्ति। तत्र शून्यार्थमारभ्य सत्त्वकारकदुःखविरहितानि चाङ्गानि [2] तदविरहितानीव च ख्यान्ति निर्दिश्यन्ते च ॥

---

1 Tib hdod pa. na spyod. pa ni thams cad do MS *sarvāṇi kāmāvacarāṇām*

2 Tib khams. gsum na spyod. pa. thams cad. do MS trailo (?) —*kyavacarāṇi*

3 Tib zab. ba par ci ltar rig par (leaf broken) bya že na

4 Tib, adds -kālāt - (dus nas ) after *anādi-*

5 Tib sar- ba sar bahi. for gsar ba gsar. bahi

6 So the MS, but Tib reads *prakāratayā* (tshul du ) for *pracaratayā.*

६६क, Tib. 125b. 1]

तत्र नैरात्म्यमारभ्यास्वतन्त्रनैरात्म्यलक्षणानि चाङ्गानि आत्मलक्षणतश्च ख्यान्ति। निरभिलप्यस्वभावतश्च [3] परमार्थतः। अभिलापतश्च स्वभावोऽस्य निर्दिश्यते॥

कतिभिर्ज्ञानैः प्रतीत्यसमुत्पादो ज्ञातव्यः। द्वाभ्यां[1] धर्मस्थितिज्ञानेन[2] तत्त्वज्ञानेन[3] च। कथं धर्मस्थितिज्ञानेन। [4] यथा भगवता प्रज्ञप्तः[4] प्रकाशितस्तथा ज्ञातव्यः। कथं तत्त्व[5]ज्ञानेन। यथा शैक्षा दृष्टपदाः[6] (?) पश्यन्ति गम्भीरार्थेन। यदुक्तं। [5] न हैव मया प्रतीत्यसमुत्पादः कृतो नाप्यन्यैरपि तूत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवेयं[7] धर्मता धर्मस्थिति[8]धर्मधातुरिति[9]। [6] कतमा धर्मता [कतमा धर्मस्थितिः][10] कतमो धर्मधातुः। यानादिकालप्रसिद्धता सा धर्मता। यथा प्रसिद्धस्य युक्तेः[11] पदव्यञ्जनैर्व्यवस्थापना धर्म[7]स्थिति। तस्याः स्थितेः सा धर्मता हेतुः। तस्माद्धेतुरित्युच्यते॥

यदुक्तं जातिश्चेन्न स्यादपि नु कस्यचित्कस्मिंश्चिदेव जाति स्यात्। सर्वशो वा जात्यामसत्या जातिप्रत्ययं जरामरणं प्रज्ञायेतेति। [Tib 126b. 1] केन कारणेनेह स्वभावप्रत्ययः स्वभाव उक्त। सबीजफल-जात्यधिकाराद् विज्ञानादीनि

---

1 Not in Tib

2 Tib chos gnas pa. śes pa dan

3 Tib de kho na śes. pa ñid kyis, Ms *anvayajñāne* ca, and below two letters illegible

4 Tib sthāpita (bźag pa) for *prajñapta* in Tib we may read brtags pa

5 See note 3 above

6 Tib. gźi which may mean in Skt *mūla* or *āgama*, *āśraya*, *ādhāra*

7 For - *Veyam* MS *dhyeyam*

8 MS omits - *tā* found in the edition of the Lankāvatāra Se below

9 Before - *dhātu* MS omits *dharma* (Tib chos. kyi.). The line quoted here occurs with slight variants in the *Lankāvatāra-sūtra*, pp 143 144 The same quotation is found also in *the Sarvadarśana-samgraha*, Govt Oriental Series, Poona, 1924, p 41 (2. 303) with some variants Tib adds at the end (gnas. paho) *iyam sthitih*

10 Omitted in Tib

11 So the MS Tib ji. ltar grags pa da (? quite clear) rigs pahi.

६६क, Tib. 126a. 2

वेदनावसानान्यङ्गानि [६६ख] [2] [1]तदप्यर्थतो जातिः। यस्मिंश्च सति पश्चात्तान्येव फलभूतानि भवप्रत्यया जातिरित्युच्यते ॥

एवं शिष्टान्यङ्गानि यथानिर्दिष्टानि यथायोगं द्रष्टव्यानि ॥

[3] यथा सर्वेषामङ्गानां नान्योन्यप्रत्ययत्वमुक्तं केन कारणेन नामरूपविज्ञानयोरन्योन्यप्रत्ययत्वं व्यवस्थाप्यते। विज्ञानस्य दृष्टे धर्मे नामरूपप्रत्ययत्वात्। नामरूपस्य पुनः [4] सम्पराये विज्ञानप्रत्ययत्वात्। तथाहि। मातृकुक्षौ प्रतिसन्धिकाले अन्योन्यप्रत्ययत्वाद्विज्ञानप्रत्ययं[2] मातुः कुक्षौ शुक्रशोणितरूपं [5]नाम परिगृहीतं कललत्वाय सम्मूर्छते[3]। तन्नामप्रत्ययश्च पुनस्तद्विज्ञानं तत्र प्रतिष्ठां लभते ॥

केन कारणेन बोधिसत्त्वस्य कृष्णपक्षं व्यवलोकयतो वि[6]ज्ञानात्प्रत्युदावर्तते मानसं न त्वन्येभ्योऽङ्गेभ्यः। यस्मादेतद्द्वयमन्योन्यप्रत्ययं। तस्य यथा विज्ञानप्रत्ययं नामरूप[7]प्रत्ययं विज्ञानं व्यवलोकयतो विज्ञानात्प्रत्युदावृत्तं। तदन्येषु त्वङ्गेषु न तथा प्रत्युदावृत्तं। तत्रैकत्वान्योन्यप्रत्ययत्व [Tib. 127a. 1]संदर्शनतया तत्प्रत्युदावृत्तमित्युच्यते। निवृत्तिपक्षे[4] तु नामरूपे न पौनर्भविकस्य विज्ञानस्य निवृत्तिहेतुर्येन[5] परः प्रत्यवेक्षितवान्[6] ॥

केन कारणेन [2]स्वयंकृतानि न परकृतानि नोभयकृतानि नाप्यहेतुसमुत्पन्नान्येतान्यङ्गान्युच्यन्ते। उत्पत्त्युत्तरसत्त्वात्। प्रत्ययस्य च निरीहत्वात्। प्रत्ययसामर्थ्य[3]सद्भावाच्च ॥

किं प्रतीत्यसमुत्पादे[7] दुःखाङ्कुरस्थानीयं किं दुःखाङ्कुरपरिपालनस्थानीयं।

---

1 MS adds here *jātibījam* not supported by Tib.

2 Lit. Tib plural number, MS *pratyayah.*

3 For *kalalatvasya* Tib arbudatvasya (mer. mer po.), MS has *kalakalatvāya*°

4 Tib paksa (phyogs la.), MS *laksane.*

5 So the MS but Tib lit *tena* (des na)

6 After - *hetur the* MS has here *yena parena pratyaveksitavān* Evidently it is defective Tib has however des. na. gžan. yin. pai, brtags. pahi phyir This too, does not correspond well.

7 Tib. rten. cin. hbrel. bar hbyun ba. las. MS - *pādaduhkhānkura,*

६६क, Tib. 126b. 1]

किं दु·खवृक्षस्थानीयं। अविद्यासंस्कारप्रत्यया विज्ञानादयो [4] वेदनावसाना अङ्कुरस्थानीयाः। तृष्णादयो वेदनाप्रत्यया भवावसानाः परिपालनस्थानीया द्रष्टव्याः। जातिर्जरामरणं च दुःखवृक्षस्थानीयं द्रष्टव्यं। [5] कत्यङ्गानि वर्ति[1]स्थानीयानि द्रष्टव्यानि। विज्ञानादीनि वेदनावसानानि। कत्यङ्गानि स्नेहस्थानीयानि। अविद्या संस्कारा [ः] तृष्णा उपादानं [6] भवश्च। कत्यङ्गानि ज्वालास्थानीयानि द्रष्टव्यानि। जातिर्जरा मरणं च।

[६७क] केन कारणेन कृष्णपक्षनिर्देशतः प्रतीत्यसमुत्पाद आचय[2] इत्युच्यते। केवलं [7] दुःख-[स्कन्धा][3]वसानफलत्वात्, सर्वेषामङ्गानां प्रत्ययं च तच्च (?) तदन्याङ्गा[4]नुगमनात्तदन्येषामङ्गानां॥

केन कारणेन शुक्लपक्षनिर्देशतः[5]। [प्रतीत्यसमुत्पादो]ऽ[6]पचय इत्युच्यते। उत्तरोत्तरप्रहाणपरिहाणतः। [ Tib 127b 1] केवलं दुःखस्कन्धापचयहेतुत्वाच्च सर्वेषां॥

कत्यङ्गानि सहेतुका धर्मा इत्युच्यन्ते। प्रथमानि सप्त। [2] कत्यङ्गानि सहेतुकं दुःखमित्युच्यन्ते। तदन्यानि पञ्च। कतीनामङ्गानां निरोध आस्रवक्षयप्रभावितः। त्रयाणां। कतीनामङ्गानां निरोधः प्रत्यय[3]क्षयप्र[7]भावितः। तेषामेव त्रयाणां तदन्यांगप्रत्ययभूतत्वात्। कतीनामंगानां निरोधः वेदनाक्षयप्रभावितः प्रहीणेषु क्लेशेषु [4]स्कन्ध[8]निरोधकाल इहैव सर्ववेदितोपरमादेकस्य॥

केन कारणेन सप्तसप्ततिर्विज्ञानानि प्रतीत्यसमुत्पादमधिष्ठाय व्यवस्थाप्यन्ते। सहेतुकसंक्लेशज्ञानोद्भावनार्थं च [5] स्वसन्ततौ स्वयंकृत[9]क्लेशोद्भावनार्थं

---

1 After *vartti* - Tib. adds - *sāra* - (mar. me *snyin* po )

2 Tib. hphel. ba

3 Tib phun po , See below *kevalam duhkhaskandha* (Tib sdug. bsnal gyi. phun. po hbah žig

4 Tib. de las gžan. pahi yan lag ni de. las gžan. pahi. yan. lag rnams. rjes su *hgro. bahi* phyir. for *tadanyāngatadanyangānyanugamanāt* as supported by Tib. quoted above MS has *tadanyāngānyanugamanāt*.

5 Tib bstan. pas MS -*nirdeśah*.

6 Tib. rten. cin. hbrel. bar. hgyur ba.

7 MS omits *pra*.

8 Tib phun. po. but MS *upari*. for *skandha*.

9 Tib. *samkleśa* (kun nas. ñon. mons pa.) for *kleśa*

च पूर्वान्तादङ्गानामनादिकाल[1]त्वोद्भावनार्थं च [6] अपरान्ता-दङ्गानां संक्लेशनिवृत्त्यवकाशोद्भावनार्थं च। अङ्गासंगृहीतसास्रवप्रज्ञापरिज्ञोद्भावनार्थं च। एकैकस्मिन्नङ्गे[3] सप्तैतानि कारणान्यधिकृत्य [7] सप्तसप्ततिर्विज्ञानानि द्रष्टव्यानि ॥

केन कारणेन चतुश्चत्वारिंशज्ज्ञानानि व्यवस्थाप्यन्ते। एकैकस्मिन्नङ्गे चतुरार्यसत्यपरीक्षामधिकृत्य चतुश्चत्वारिंशद्भवन्ति ॥

[Tib. 128a. 1] तत्र कामधातौ जातो भूतः कामावचरेणाश्रयेणोर्ध्वभूमिकं चक्षुः श्रोत्रं चाभिनिर्हरति। तेन चाधोभूमिकानि[4] च रूपाणि [2] पश्यति। शब्दांश्च शृणोति। त्रैधातुकावचरं पुनर्मनस्तेनैवाश्रयेण संमुखीकरोत्यपर्यापन्नं च रूपारूप्यधातौ जातोऽधोभूमिकवर्ज्यं सर्वं संमुखीकरोति यथैव कामधातौ ॥

अस्य खलु [3] त्रिविधस्य संक्लेशस्य क्लेशसंक्लेशस्य [कर्मसंक्लेशस्य][5] जन्मसंक्लेशस्य च प्रहाणाय षड्विधोऽभिसमयो वेदितव्यः। तद्यथा। चित्ता-[4]भिसमयः[6] [7]श्रद्धाभिसमयः शीलाभिसमयोऽभिसमयज्ञानसत्याभिसमयोऽभिसमयान्तिकज्ञानसत्याभि[5]समयो निष्ठा[8]भिसमयश्च ॥

योगाचारभूमौ सवितर्का सविचारा अवितर्का [विचारमात्रा[9]]
अवितर्काविचारा भूमिः[10] समाप्ता[11] ॥

---

1 Here -kalatva is omitted in Tib.

2 For apaṛānta (Tib. phyi. mahi mthah) Tib. reads here pūrvānta (Tib snon. gyi. mthah)

3 In Tib ekai° nge not found

4 Tib. adds here svabhūmikāni (ran gi sa pahi).

5 Tib. las kyi. kun nas ñon mnob.

6 Tib. bsam pahi, MS cittābhi-.

7 Tib dad. pahi MS śraddhā ?

8 For niṣṭhā in Tib text thug is wrongly repeated.

9 Tib. rtog. pa. med. la dpyod. pa. tsam. dan

10 Tib, adds pancamī (lna pa.).

11 In fact here ends the third, fourth and fifth Bhūmis.